तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहन स्यावग्रहणं करिष्यामीति पार्श्वचरानवेक्षांचक्रे ।

निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोषोरागे राजपुत्री राजाङ्गणम् । रक्षिभिरुपतस्थे च क्षरितगण्डश्चण्डपोतकः । क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोरूपिणी भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत् । देव दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी नाम सुरसुन्दरी । तस्या मे नभसि परिपतन्नलिनलुब्धमुग्धकलहंसानुबद्धचक्रवालायास्तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत् । पातितश्च कोपितेन कोपि तेन मयि शापः । पापे भजस्व लोहजातिमजातचैतन्या सतीति । स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत् । अनल्पेन च पाप्मना रजतशृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शंकरगिरौ समभ्यगमत् । आत्मसात्कृता च तेनाहमासम् । अथासौ पितृप्रयुक्तवैरे वर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते चिरसाशयस्तदपकारक्षमोयमिति तपस्यता दर्पसारेण सह समसृज्यत । प्रतिश्रुतं च तेनास्मै स्वस्वसुरवन्तिसुन्दर्याः प्रदानम् । अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत् । अन्तरितस्तिरस्कारिण्या विद्यया स च तां तदा

1. °साहाय्याय C., S.— 2. अवग्रहं Bhû., C., A[r]., Ah[d].; G.; we accdg. to Pa[d]., S.— 4. उपतस्थौ W., A[r]., G.— 5. अप्सरो C., S.; अप्सरा G.— 11. कोपि om. S., G., A[r].,W., मयि om. S., G., A[r].,—12. भज G., A[r].— 14. पञ्चेन्द्रियाणां W.— 15. रूप्यशृङ्ख° G., रूप्यशृंख. ...कृताम्. C.,—A[r]. °भूतामादाय मां S., G.— 17. प्रवर्तमाने Pa[d].— 17. भाविविद्याधर° M.— 22. स च om. W., C., G.

पट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानान्वलावलिप्तान्प्रतिवलवीरान्वहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप । क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोभिमुखमभिधावता वलनिकायेन परिक्षिप्तम् ।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्नखरः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन्पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययादयमेव स देवो राजवाहन इति कृताञ्जलिः प्रणम्यापहारवर्माणि निविष्टदृष्टिराचष्ट । सखेत्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम् । अरिवलं च विहतविध्वस्तं स्त्रीवालहार्यशस्त्रं वर्तते '। किमन्यत्कृत्यमिति । हृष्टस्तु व्याजहारापहारवर्मा । देव दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः । सोयमहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः । स एवायं निर्गमय्य वन्धनादङ्गराजमपवर्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येण चामुना सह राजकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोष इति । देवोपि यथा ते रोचत इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार । प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव भागीरथीपुलिनमण्डले सुखं निषसाद । तथा निषण्णं तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा काशीभर्त्रा च कामपालेन

1. प्रहरणजालं W.; उपयुञ्जानः all MSS. except Pa[d].— 4. अन्तरे च G.; Bhû., Ah[d].— 7. इषुवर्षेणाभिपात्य G., S.— 10. राजन्यकं C., W.— अखिलारिवलं S., Bhû., अखिलं चारि° G.— 12. सोयमप्यहमेवा W., C., S.; °हामिव G.; सोयमेव हीति Pa[d].; सोयमहमिव Ar.— 13. एवाय W.;— 15. राजन्यकेन W.; C., S. G.; we accdg. to Pa[d].—16. च om. and गत्वा after मार्गेण G ; A[r].— 17. कस्यचिन्मूले A[r].; S., W.,—19. स्फटिकासन इव भागीरथी° A[r].; स्फाटिकमय इव भा° W.; मातङ्ग इव om. A[r].

चम्पेश्वरेण सिंहवर्मणा सहागत्य धनमित्रः प्रणिपपात । देवोपि हर्षाविद्धमभ्युत्थितः कथं समस्त एव मित्रगणः समागतः को नामायमभ्युदय इति कृतयथोचितोपचारानुत्पीडिततरं परिरेभे । काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान्पितृवदपश्यत् । तैश्च हर्षनिर्भरतरं सरभसोपगूढः परमाभिननन्द । ततः प्रवृत्तासु प्रीतिसंकथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुङ्क्त । तेषु प्रथमं प्राह स्म किलापहारवर्मा ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते
प्रथम उच्छ्वासः ॥

---

1. सहोपगत्य W., C.— 2. समस्त एव W., C.—समुपागतः Ar., S.— 3. °बन्धांश्च° S., Ar.— 4. हर्षकम्पितरतरं C., S. W., Bhû.; हर्षनिर्भरतरं Ms. W. note; हर्षनिर्भरसंभ्रमो° G.— 5. सहर्षोपगूढः S.

## ॥ अथ द्वितीय उच्छ्वासः ॥

देव त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रसृते च मित्रगणेऽहमपि महीमटन्नङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिरिति कुतश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम्। न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य च्छायायां कमप्युद्विग्नवर्णं तापसम्। अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः क्वासौ भगवान्मरीचिः। तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम्। आश्चर्यज्ञानविभवो हि स महर्षिर्मह्यं विश्रुत इत्यवादिषम्। अथासावुष्णमायतं च निःश्वस्याशंसत्। आसीत्तादृशो मुनिरस्मिन्नाश्रमे। तमेकदा काममञ्जरी नामाङ्गपुरीवतंसस्थानीया वारयुवतिरश्रुबिन्दुताराकितपयोधरा सनिर्वेदमभ्युपेत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट। तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत्। स किल कृपालुस्तं जनमार्द्रया गिरोत्थाप्यार्त्तिकारणं तां गणिकामपृच्छत्। सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत्। भगवन्, ऐहिकस्य सुखस्याभाजनं जनोऽयमामुष्मिकाय श्रेयसीयायार्त्यभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्न इति। तस्यास्तु जनन्युदञ्जलिः पलितशारशिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत। भगवन्, अस्या मे दोषमेषा वो दासी विज्ञापयति। दोषश्च मम स्वाधिकारानुष्ठापनम्। एष हि गणिकामातुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणमापञ्चमाद्वर्षात्पितुरप्यनतिदर्शनं जन्मदिने पुण्यदिने चोत्सवोत्तरो मङ्गलविधिरध्यापनमनङ्गविद्यानां साङ्गानां

1. °प्रस्थिते Pa[d].— 9. अशंसत् W.— 10. अङ्गपुर्यवतंस° W.; C.; G.; Bhû; we accdg. to Pa[d]., S., Ah[d]. and Bhû. v. l.— 11. उपेत्य W., C.— 12. तदाप्तवर्गः W.— 12. पतति पातं M.— 13. गिराश्वस्य W., C.— 18. अस्यां W., Bhû.; दोष एषा W.— 19. यत् om. W., C.— 21. मिताहारेण W.—22. °दिनेषु twice G.; °दिने °दिनेषु C. °दिन twice Pa[d].

नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलेषु च सम्यग्विनयनं शब्दहेतुसमयविद्यासु वार्त्तावार्तावबोधनमाजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणमभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणं, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिवर्हायाः प्रकाशनं, प्रसङ्गवत्यां संगीतादिक्रियायां पूर्वसंगृहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनं, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनं, कार्तान्तिकादिभिः कल्याणलक्षणोद्धोषणं, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनं, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोर्थऽशक्तिशौचत्यागदाक्षिण्यशिल्पमाधुर्योपपन्नाय स्वतन्त्राय प्रदानमधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणमस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणमलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे वा साधनं, रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनं, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणमददता लुब्धप्रायेण च विगृह्यासनं, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसंधुक्षणमसारस्य वाक्संतक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमानैश्चापवाहनमर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यैरनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः संयोजनमिति। गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः। सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थितेऽनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव व्ययेन रममाणया मासमात्रमत्यवाहि। गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयानया प्रकोपितः। स्वकुटुम्बकं चावसादितम्। एषा कुमतिर्न कल्याणीति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता। सा

1. मात्रा°— 7. ऽपघोषणं W.; घोषणं S.— 9. प्रभूतायाः W., ऽपस्थापनं S.— 13. गुरुभ्य. W.— 14. अधिकगुणे S.; वा om. Bhû.; च Pa[d].—रक्ततरस्य C.; G.— 19. अनिन्द्यरभ्यैः C., W.— 22. धनव्ययेन C., W.

चेदियमहार्यनिश्चया सर्व एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यत इत्यरोदीत् ।

अथ सा वारयुवतिस्तेन तापसेन भद्रे ननु दुःखाकरोऽयं वनवासः । तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुःसंपाद एव । द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्वेति सानुकम्पमभिहिता । सा तु प्रत्यवादीत् । यदि भगवत्पादमूलमशरणं शरणमस्तु मम कृपणाया हिरण्यरेता देव एवेत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदत् । संप्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारी सुखोपभोगसमुचिता सत्यरण्यवासोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यतीति ।

तथेति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतकालवालपूरणैर्देवतार्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोपहारकर्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसंबन्धिनीभिः कथाभिरध्यात्मवादैश्चानुकूलैरल्पीयसैव कालेनान्वरञ्जयत् ।

एकदा च रहसि रक्तं तमुपलक्ष्य मूढः खलु लोको यत्सह धर्मेणार्थकामावपि गणयतीति किंचिदस्मयत । कथय वासु केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेत इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम् । इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् । अथवा तदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु श्रूयताम् । ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मनः समाधानमात्रसाध्यश्च सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते । तत्त्वदर्शि-

---

2. अवादीत् W.— 8. हिरण्यरेता एव W.; हिरण्यरेता देव इ° S.— 10. अरण्यवासेन. G.; °वासव्यसनेन C.— 12. °भक्तिभिः Pa^d.— 14. °कुसुमसमुच्चया°. W., C., S., G., Bhû.; we accdg. to Pa^d.—अनेकवि° W.— 16. अनुरूपैः W., C.—20. सलज्जा W.— 23. स धर्मः G., C.

नोपबृंहितश्च यथाकथंचिदप्यनुष्टीयमानाभ्यां नार्थकामाभ्यां बाध्यते। बाधितोपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हत्य श्रेयसेऽप्यनल्पाय कल्पते। तथा हि पितामहस्य तिलोत्तमायामभिलाषो भवानीपतेर्मुनिपत्नीसहस्रसंदूषणं पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः शचीपतेरहल्याजारता शशाङ्कस्य गुरुतल्पगमनमंशुमालिनो वडवालङ्घनमनिलस्य केसरिकलत्रसमागमो बृहस्पतेरुतथ्यभार्याभिसरणं पराशरस्य दाशकन्यादूषणं पाराशर्यस्य भ्रातृदारसंगतिरत्रेर्मृगीसमागम इति। अमराणां च तेषु तेषु कार्येष्वासुरविप्रलम्भनानि ज्ञानबलान्न धर्मपीडामावहन्ति। धर्मपूते च मनसि नभसीव न जातु रजोनुषज्यते। तन्मन्ये नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशत इति।

श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात्। अयि विलासिनि साधु पश्यसि। न धर्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यत इति। किंतु जन्मनः प्रभृत्यर्थकामवार्तानभिज्ञा वयम्। ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ चेति। सा त्वब्रवीत्। अर्थस्तावदर्जनवर्धनरक्षणात्मकः कृषिपाशुपाल्यवाणिज्यसंधिविग्रहादिपरिवारस्तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः। परिवारस्तु तस्य यावदिह रम्यमुज्ज्वलं च वस्तु। फलं पुनः परमाह्लादनं परस्परविमर्दजन्म स्मर्यमाणमधुरमुदीरिताभिमानमनुत्तमं सुखमपरोक्षं स्वसंवेद्यमेव तस्यैव कृते विशिष्टस्थानवर्तिनः कष्टानि तपांसि महान्ति दानानि दारुणानि युद्धानि भीमानि समुद्रलङ्घनादीनि मानवाः समाचरन्तीति।

निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत्। सा सुदूरं मूढात्मानं च तं प्रवहणेन

1. °उपबृंहितस्तु W.— 2. अपि om. W.— 5. अनिलस्य° W.— 15. चेति W.— 17. °अतिसक्त° Bhû.: अभिषिक्त° G.— 18. वे om G., वस्तु om. C.;— 19. स्वसंवेद्यं om. G., S.— 21. समुद्रलङ्घनादीनि om. C.— 22. नियतिबलात्तु W.

नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत् । अभूच्च घोषणा श्वः कामोत्सव इति । उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालमारब्धकामिजनवृत्तं निवृत्तस्ववृत्ताभिलाषं क्षणमात्रेऽपि गते तया विना दूयमानं तमृषिमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः संनिधौ स्मितमुखेन तेन भद्रे भगवता सह निषीदेत्यादिष्टा सविभ्रमं कृतप्रणामा सस्मितं न्यषीदत् ।

तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना देव जितानयाहम् । अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मयेति प्रभुं प्राणंसीत् । विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत । हृष्टेन च राज्ञा महार्हैरलंकारैर्महता च परिवर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत । भगवन् अयमञ्जलिः । चिरमनुगृहीतोयं दासजनः । स्वार्थ इदानीमनुष्ठेय इति । स तु रागादशनिहत इवोद्भ्राम्याब्रवीत् । प्रिये किमेतत् । कुत इदमौदासीन्यम् । क्व गतस्तव मय्यसाधारणोनुराग इति । अथ सा सस्मितमिदमवादीत् । भगवन् ययाद्य राजकुले मत्तः पराजयोभ्युपेतस्तस्याश्च मम च कस्मिंश्चित्संघर्षे महर्षिं मरीचिमावर्जितवतीव श्लाघस इति तयाहमधिक्षिप्ता दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादादिति । स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवत्र्यवर्तिष्ट । यस्तयैवं कृतस्तपस्वी तमेव मां महाभाग मन्यस्व । स्वशक्तिनिषिक्तं रागमुद्धृत्य तयैव बन्धक्या महद्वैराग्यमर्पितम् । अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम् । अस्यामेव तावदङ्गपुर्यां चम्पायामिति ।

---

2. आरचितमुण्डमालं G., S., W; आचरित° Pa[d].—3. क्षणमात्रेपि G., S.; गतेपि C., वापि om W.— 3. दूयमानचित्तं C., S.— 5. जन om. W.—समासदत्तत्र स्मितमुखेन. W.— 8. तद्दास्यम् W.— 10. गुणतः M.— 12. अशनिनिहतः W.— 14. इदं om. W., C.— 18. तयास्म्यहम° G., C., S.; we accdg. to W. and Bhû.— 18. शून्यमेव G., S.— 19. शक्ति om. C.— 20. त्वदर्थसंपादन° S.

अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगादपिमुक्तश्च रागः संध्यात्वेनास्फुरत् । तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन् । अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य संध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम् । अदर्शं च मार्गाभ्यासवर्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकषण्डे निषण्णमस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमनभिरूपाणां कृपणवर्णकमपि क्षपणकम् । उरसि चास्य शिथिलितमलनिश्चयान्मुखान्निपततोऽश्रुबिन्दूनलक्षयम् । अप्राक्षं चान्तिकोपविष्टः । क्व तपः क्व च रुदितम् । न चेद्रहस्यमिच्छामि श्रोतुं शोकहेतुमिति । सोऽब्रूत । सौम्य श्रूयताम् । अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम । वैरूप्यात्तु मम विरूपक इति प्रसिद्धिरासीत् । अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धोपि वसुना नातिपुष्टोऽभवत् । तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपाद्यत । ततस्त एव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य न वपुर्वसु वा पुंस्त्वमूलम् । अपि तु यः प्रकृष्टगणिकाप्रार्थ्ययौवनो स एव पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकामिति व्यवास्थापयन् । तदभ्युपेत्यावां प्राहिणुव तस्यै दूतान् । अहमेव किलामुष्या स्मरोन्मादहेतुरासम् । आसीनयोश्चावयोर्मामिवोपगम्य सा नीलोत्पलमयामिवापाङ्गदामाङ्गे मम मुञ्चती तं जनमपत्रपयाधोमुखं व्यधत्त । सुभगंमन्येन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरी कृता कृतश्चाहमनया

2. °स्नानि om. M.— 6. अभ्यास° W., Bhû., Ab$^{d}$. बहिश्चन्यायाः— S. निपतितान् W.—12. तु. om. W.—15. त एव om. S.— 16. °वचनशतव्याति° G.; वचनशतव्यतिकरशत° S.— 17. प्रकृष्ट...नो हि यः स पु° C.; W.— 19. तदभ्यु° om. W., C.— 21. अपाङ्गदाम W., C., S., Bhû.; we accdg. to G. and Pa$^{d}$.— 22. सुभगेन G., C., S., W., we accdg. to Pa$^{d}$.

मलमल्लकशेषो हृतसर्वस्वस्तया चापवाहितः । अपद्य लोकोपहासलक्ष्यतामक्षमश्च धिक्कृतानि पौरवृद्धानां सोढुमिह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एष वेशो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् । अथ पुनः प्रकीर्णमलपङ्कः प्रबलतरकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखः स्थानासनशयनभोजनेषु द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम् । अहमस्मि द्विजातिः । अस्वधर्मो ममैष पाषण्डपथावतारः । श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रावर्तन्त । मम तु मन्दभाग्यस्य निन्द्यवेषममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलम् । अफलं विप्रलम्भप्रायमीदृशमिदमधर्मवर्त्म धर्मवत्समाचरणीयमासीदिति । प्रत्याकलितस्वदुर्नयः पिण्डीखण्डं विविक्तमेतदासाद्य पर्याप्तमश्रु मुञ्चामीति । श्रुत्वा चैतदनुकम्पमानोऽब्रवम् । भद्र क्षमस्व कंचित्कालमत्रैव निवस । निर्जेन क्षुब्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये । सन्त्युपायास्तादृशा इत्याश्वास्य तमनूत्थितोऽहम् । नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृतिस्थानमूंन्विधास्यन्कर्णीसुतप्रहिते पथि मतिमकरवम् । अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि । तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्याधिक्षेपवचनानि जीवितनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान्न्यायबलप्रतापप्रायानङ्गीकृतार्थसाधनक्षमान्बलिषु सान्त्वनानि दुर्बलेषु भर्त्सि-

1. हृतसर्वस्वतया चा° C.; च om. W.—2. इहैवायतने W.; उपदिष्ट उत्तमो व° W.— 4. संकीर्ण° W.— 7. पाषण्डि° S., C.— 8. एव om. S.— 10. अफलं om. S.—15. अहं om. G., S; अभ्युत्थितः W.; उत्थितः C., G.—16. लुब्धेभ्यपू° G., Ah[d].; लुब्धसाभिकामिभ्यपू° S.— 17. अथ प्रतिपद्य. G.; अनुप्रपद्य Bhû.;— 18. च om. S.— 18. द्यूतसमाजम° W.—च om. W., S. C.; we accdg. to G. and Pa[d].— 22. प्रयोजितार्थसाधनक्षमान् C., G., जितार्थ° S.

तानि पक्षरचनानैपुणमुच्चावचानि प्रलोभनानि कलहप्रभेदवर्णनानि द्रव्यसंविभागौदार्यमन्तरान्तराश्लीलप्रायान्कलकलानित्येतानि चान्यानि चानुभवन्न तृप्तिमध्यगच्छम्। अहसं च किंचित्प्रमाददत्तशारे क्वचित्कितवे। प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य शिक्षयसि रे द्यूतवर्त्म हासव्याजेन। आस्तामयमशिक्षितो वराकः। त्वयैव तावद्विचक्षणेन देविष्यामीति द्यूताध्यक्षानुमत्या व्यत्यषजत्। मया जितश्चासौ षोडशसहस्राणि दीनाराणाम्। तदर्धं सभिकाय लब्धेभ्यश्च दत्त्वार्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्।

तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे संधिं छित्त्वा पटभाससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यग्रो निजगृहमिवानुप्रविश्य नीवीं सारवतीमादाय निरगाम्। नीलनीरदनिकरपीवरतिमिरनिबिडितायां राजवीथ्यां झटिति शतह्रदासंपातमिव क्षणमालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषपरोषिता निःसंबाधवेलायां निःसृता संनिकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। कासि वासु क्व यासीति सदयमुक्ता त्रासगद्गदमगादीत्। आर्य पुर्यामस्यामर्यवर्यः कुबेरदत्त-

1. नैपुण्यं W.; उपप्रलोभ° Bhû., W., S., C.— 5. रे om. S., G.— 8. अनुदतिष्ठंश्च S.— 9. अत्युदारं om. W., Com. do not explain it.— 12. च om. S.; शीलतः om. S.— 13. नीलवसना° W.— 15. [illegible] Bhû.— 16. पटभास Pa[d].; पटहास° C.; we accdg. to Bhû., Ah[c].; S. पटभास°.—18. °तिमिरभारनिबिडितायां G.; S.; निबिडपीडितायां C., W.; °तमोनि° Pa[d].;— 21. °विभूषणा S.; कासि: om. S.— 22. सगद्गदं नाम° W.—अर्द्य C. W. S. कुबेरदत्त° W.

नामा प्रतिवसति । अस्म्यहं तस्य कन्या । मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद्भार्यां मे पिता । स पुनरस्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वैवार्थिवर्गाद्दारिद्र्यं दरिद्रति सत्यथोदारक इति प्रीतलोकाधिरोपितापरश्लाघ्यनामनि वरयत्येव मां तरुणीभूतामधन इत्यदत्त्वार्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता । तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथाभिसरा तदागारमभिसरामि । तन्मां मुञ्च गृहाणेतद्भाण्डमित्युन्मुच्य मह्यमर्पितवती । दयमानश्चाहमब्रवम् । एहि साध्वि त्वां नयेयं त्वत्प्रियावसथमिति त्रिचतुराणि पदान्युदचलम् । आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम् । दृष्ट्वैव प्रवेपमानां कन्यकामवदम् । भद्रे मा भैषीः । अस्त्ययमसिद्वितीयो मे बाहुः । अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः । शयेऽहं भावितविषवेगविक्रियः । त्वयामी वाच्याः । निशि वयमिमां पुरीं प्रविष्टाः । दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन्सभागृहकोणे । यदि वः कश्चिन्मन्त्रवित्कृपालुः स एवैनमुज्जीवयन्मम प्राणानाहरेदनाथाया इति । सापि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् । अशयिषि चाहं भावितविषविक्रियः । तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्चोपक्रम्याकृतार्थो गत एवायं कालदष्टः । तथा हि । स्तब्धश्यावमङ्गं रुद्धा दृष्टिः । शान्त

---

1. वसति W.— 3. अमुष्मिन् W., C., S.; दरिद्रत्यथो S.; दारिद्र्यात्युदार° G.— 4. इति च W., C.— 8. मन्मथैकाभिसरा S., G.; °सारा Bhû.— 10. नयै W., त्वत्प्रियतमं W., C.; °प्रियं G.; प्रियावसं S.— 12. दृष्ट्वैव om. C.; W., S., Ar.— 13. अयम् om. W.— 14. शयेयं W., शयेय C.; शयीयाहं S., we accdg. to Pa[d]. and G.—°विक्रिय° om. S.; त्वयाप्यमी W.— 16. सभाकोणे C., G., S.; कोण एव W.— 16. एव तमनुजी° W.; एव om. C.— 19. नरेन्द्रमानी S., G.— 21, °श्यावर्ण° W.; Bhû.

एवोन्मा । शुचालं खलु श्वोऽभिसारकारिण्यामः । कोऽतिवर्तते दैवमिति सहेतरैः प्रायात् ।

उत्थितश्चाहमुदारकाय तां नीत्वाब्रवम् । अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन स्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम् । भूषणमिदमस्या इत्यंशुपटलपाटितध्वान्तजालं तदर्पितवान् । उदारकस्तु तदादाय सलज्जं च सहर्षं च ससंभ्रमं च मामभाषत । आर्य त्वयैवेयमस्यां निशि प्रिया मे दत्ता वाक्पुनर्ममापहृता । तथा हि । न जाने वक्तुं त्वत्कर्मैतदद्भुतमिति । न ते स्वशीलमद्भुतत्वमतिभाति । नैवमन्येनापि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः । न हि त्वय्यन्यदीया लोभादयः । त्वयाद्य साधुतोन्मीलितेति तस्करस्त्वत्पूर्वविज्ञानेभ्यो न रोचते । दृष्टमिदानीमौदार्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निश्चयः । त्वयामुना सुकृतेन क्रीतोऽयं दासजन इत्यसारमतिगरीयसा क्रीणामीति न ते प्रज्ञाविक्षेपः । प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम् । अथवैतावदत्र प्राप्तरूपम् । अद्यप्रभृति भर्तव्योऽयं दासजन इति मम पादयोरपतत् । उत्थाप्य चैनमुरसोपश्लिष्याभाषिषि । भद्र काद्य ते प्रतिपत्तिरिति । सोऽभ्यधत्त । न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम् । अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि । को वाहं यथा त्वमाज्ञापयसीति । अथ मयोक्तम् । अस्त्वेतत् । स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य । किंतु बालेयमनल्पसौकुमार्या कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः । शैथिल्यमिव किंचित्प्रमादस्त्वयोरनयैनेदृशेन देशत्यागेन संभाव्यते । तत्सहानया सुखमिहैव वस्तव्यम् । एहि नयावैनां

4. सहायेन S., G.— 6. the first च om. S.; the first two च om. G.— 9. नड ते स्व° W.; न च स्व° S.— 15. अथ प्राप्तरूपं C., G.— 18. पित्रोः W.; मातापित्रोः S.— 19. मयोक्तं कर्तव्यमस्त्वेतद्देशो S.— 20. विदग्धस्य om. [illegible] ध्याव चैनां S.; नयाव चैनां G.

स्वमेवावासमिति । अविचार्यानुमते तेन सद्य एव तां तद्गृहमुपनीय तयैवापसर्पभूतया तत्र मृद्भाण्डावशेषमचोरयाव । ततो निष्पत्य क्वचिन्मुषितकं निधाय समुच्चलन्तौ नागरिकसंपातेन मार्गपार्श्वशायिनं कंचिन्मत्तवारणमुपरिपुरुषमाकृष्याध्यारोहाव । ग्रैवेयग्रोतपादयुगलेन च मयोत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः पुरीतल्लता-परीतदन्तकाण्डः स रक्षिकवलमाक्षिणोत् । अध्वंसयाव चामुनैवार्थ-पतिभवनम् । अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकयावत-राव । स्वगृहं गतौ च स्नातौ शयनमध्यशिश्रियाव ।

तावदेवोदगादुदधेरुदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवा-पीडपाटलं पतङ्गमण्डलम् । उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गला-न्यनुष्ठायास्मत्कर्मतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोला-हलम् । अथार्थैरर्थपतिः कुबेरदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमकल्पयत् । उपह्वरे पुनरित्यशिक्षयं धनमित्रम् । उप-तिष्ठ सखे । एकान्त एव चर्मरत्नभस्त्रिकामिमां पुरस्कृत्याङ्गराजं-माचक्ष्व । जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रम् । सोऽहं मूलहरत्वमेत्यार्थिवर्गादस्म्यवज्ञातः । मदर्थमेव संवर्धितायां कुलपालिकायां महादारिद्र्यदोषात्पुनः कुबेरदत्तेन दुहितर्य-र्थपतये दित्सितायामुद्वेगादुज्झितुमसूनुपनगरभवं जरद्वनमवगाह्य कण्ठ-न्यस्तशस्त्रिकः केनापि जटाधरेण निवार्यैवमुक्तः । किं ते साह-सस्य मूलमिति । मयोक्तम् । अवज्ञासोदर्यं दारिद्र्यमिति । स पुनरेवं कृपालुरन्वग्रहीत् । तात मूढोऽसि । नान्यत्पापिष्ठतममात्मत्यागात् । आत्मानमात्मनानवसाद्यैवोद्धरन्ति सन्तः । सन्त्युपाया धनार्जनस्य

1. स्ववासं W.; सयैवैनां W.—2. मृद्भाण्डावशेषं S., G.—3. नागरिकपुरुषसंपाते G., S., C.; W., Bhû.— 4. उपरिपुच्छं C.; ग्रैवेयकप्रतोद° W.— 5. गजपतिः पतिता° S.; G.—7. चावतराव S.; C.—9. तावत्तोद° S.—11. °तुमुलत्वम् M. अनु चरन्तौ W.— 13. पुनराशिक्षवं W.— 14. चर्मभस्त्रिकां S.; Bhû.— 16. स्ववर्गावज्ञातः S.— 18. उपपौरिकं S., उपनगरागिक G.— 20. अवज्ञासोदर्यं° W., G., S.—21. पापतमं S.

बहवो नैकोपि च्छिन्नकण्ठप्रतिसंधानपूर्वस्य प्राणलाभस्य । किमनेन । सोऽस्म्यहं मन्त्रसिद्धः । साधितेयं लक्षग्राहिणी चर्मरत्नभस्त्रिका । चिरमहमस्याः प्रसादात्कामरूपेषु कामप्रदः प्रजानामवात्सम् । मत्स- रिण्यां जरसि भूमिस्वर्गमत्रेद्देशे प्रवेक्ष्यन्नागतः । तामिमां प्रतिगृहाण । मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्ध इति हि तन्त्रता प्रतीतिः । किंतु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयम् । न्याया- र्जितं तु देवब्राह्मणेभ्यस्त्याज्यम् । तथेयं देवतेव शुचौ देशे निवे- श्यार्च्यमाना प्रातःप्रातः सुवर्णपूर्णैव दृश्यते । स एष कल्प इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि ग्रावच्छिद्रं प्राविशत् । इयं च रत्नभूता चर्मभस्त्रिका देवायानिवेद्य नोपजीव्येत्यानीता । परंतु देवः प्रमाणमिति । राजा च नियतमेव वक्ष्यति । भद्र प्रीतोऽस्मि । गच्छ यथेच्छमेनामुपभुङ्क्ष्वेति । भूयश्च ब्रूहि । यथा न कश्चिदेनां मुष्णाति तथानुगृह्यतामिति । तदप्यवश्यमसावभ्युपेष्यति । ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्नक्तमापूर्य प्राह्णे लोकाय दर्शयिष्यसि । ततः कुबेरदत्तस्तृणाय मत्वार्थपतिमर्थलुब्धः कन्यकया स्वयमेव त्वामुपस्थास्यति । अथ कुपितोऽर्थपतिर्व्यवहर्तु- मर्थगर्वादभियोक्ष्यते । तं च भूयश्चित्रैरुपायैः कौपीनावशेषं करिष्यावः । स्वकं च चौर्यमनेनैवाभ्युपायेन सुप्रच्छन्नं भविष्यतीति । हृष्टश्च धनमित्रो यथोक्तमन्वतिष्ठत् । तदहरेव मन्नियोगाद्विमर्दकोर्थपतिसेवा- भियुक्तस्तस्योदारके वैरमभ्यवर्धयत् । अर्थलुब्धश्च कुबेरदत्तो निवृ- त्यार्थपतेर्धनमित्रायैव तनयां तानुनयं प्रादित्सत । प्रत्यवभ्राचार्यपतिः ।

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरी नाम पञ्चवीरगोष्ठे संगीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः । स चाहं सह सख्या धनमित्रेण तत्र संन्यधिषि । प्रवृत्तनृत्यायां च

1. अपि om. W.—5. वारयोषिन्मुख्याभ्य W.; तत् om. W.— 6. किंतं तत्तस्मै G.— 8. कल्पविधि: इति बद्धाञ्जलिरतिष्ठम् । W.—9. किमपि om. W.— 14. दर्श- यनिम् W.—23. संगीतं Bhû.— 24. नृत्यायां च तस्यां S. °नृत्तायां W.

तस्यां द्वितीयं रङ्गपीठे ममाभून्मनः। तद्दृष्टिविभ्रमोत्पलवनसञ्चापाश्रयश्च पञ्चशरो भावरसानां सामग्र्यात्समुदितबल इव मामतिमात्रमव्यथयत्। अथासौ नगरदेवतेव नगरमोपरोधिता लीलाकटाक्षमालाशृङ्खलाभिर्नीलोत्पलपलाशदामश्यामलाभिर्मामबध्नात्। नृत्योत्थिता च सा सिद्धिलाभशोभिनी किं विलासात्किमभिलाषात्किमकस्मादेव वा न जानेऽसकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रममारेचितभ्रूलतमभिवीक्ष्य सापदेशं च किंचिदाविष्कृतदशनचन्द्रिकं स्मित्वा लोकलोचनमानसानुयाता प्रातिष्ठत।

सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शमपदिशन्विविक्ते तल्पे मुक्तैरवयवैरशयिषि। अतिनिष्णातश्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्। सखे सैव धन्या गणिकादारिका यामेवं भवन्मनोऽभिनिविशते तस्याश्च मया सुलक्षिता भाववृत्तिः। तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति। स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः। किंतु सा किल वरकन्यका गणिका स्वधर्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत। गुणशुल्काहं न धनशुल्का। न च पाणिग्रहणादृतेऽन्यभोग्यं यौवनमिति। तच्च मुहुः प्रतिषिध्याकृतार्था तदग्रिणी काममञ्जरी माता च माधवसेना राजानमश्रुकण्ठ्यौ व्यजिज्ञपताम्। देव युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकं महत्याशा। सा च मूलच्छिन्ना यदियमतिक्रम्य स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते। कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति। एवं सति सा चेदियं देवपादाज्ञयापि तावत्प्रकृतिमापद्येत तदा पेशलं भवेदिति।

3. अत्रासौ W.— 4. पलाशश्यामलाभिः W., C.— 5. वा om. W.— 6. सविभ्रमारेचित° W., °लतां W., S.—आवर्जितदशन° S.— 11. सा.— 13. अचिराया° S.— 15. समगिरत W., S., Pa[d]., we accdg. to Bhû., C. G.,— 21. अच्युतं om. W.; °वृत्तेवान्यतमं S., C.; वृत्तमेवानयाष्टितं G.; we accdg. to Pa[d].

राज्ञा च तदनुरोधात्तथानुशिष्टा सत्यप्यनाश्रवैव सा यदासीत्तदास्याः स्वसा माता च रुदितनिर्बन्धेन राज्ञे समगिरेताम्। यदि कश्चिद्भुजङ्गोऽस्मदिच्छया विनैनां बालां विप्रलभ्य नाशयिष्यति स तस्कर-वद्वध्य इति। तदेवं स्थिते धनादृते न तत्स्वजनोऽनुमन्यते। न तु धन-दायासावभ्युपगच्छतीति विचिन्त्योत्राभ्युपाय इति।

अथ मयोक्तम्। किमत्र चिन्त्यम्। गुणैस्तामावर्ज्य गूढमर्थैस्तत्स्वजनं तोषयिष्यामीति। ततश्च काञ्चित्काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन तया बन्धक्या पणबन्धमकरवम्। अजिनरत्नमुदारकान्मुषित्वा मया तुभ्यं देयं यदि प्रतिदानं रागमञ्जरीति। सोहं संप्रतिपन्नायां च तस्यां तथा तमर्थं संपाद्य मद्गुणोन्मादिताया रागमञ्जर्याः करकिसलयमग्रहीषम्। यस्यां च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्यान्तरापदेशेन समाहूतेषु शृण्वत्स्वेव नागरमुख्येषु मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रमुल्लङ्घ्य बहुतर्जयत्। उक्तं च धनमित्रेण। भद्र कस्तवार्यो यत्परस्य हेतोर्मामाक्रोशसि। न स्मरामि स्वल्पमपि तवापकारं मत्कृतमिति। स भूयोऽपि तर्जयन्निवाब्रवीत्। स एष धनगर्वो नाम यत्परस्य भार्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि। ब्रवीषि च कस्तवापकारो मत्कृत इति। ननु प्रतीतमेवैतत्सार्थवाहस्यार्थपतेर्विमर्दको बहिश्चराः प्राणा इति। सोहं तत्कृते प्राणानपि परित्यजामि ब्रह्महत्यामपि न परिहरामि। ममैकरात्रजागरप्रतीकारस्तवैष चर्मरत्नाहंकारदाहज्वर इति। तथा ब्रुवाणश्च पौरमुख्यैः सामर्षमाकुश्यापवाहितोऽभूत्। इयं च वार्त्ता कृत्रिमार्त्तिना धनमित्रेण चर्मरत्ननाशमादावेवोपक्षिप्य

2. समगिरतां C., S.—3. विप्रलोभ्य G., S.; विलोभ्य W.—5. इति om. W.—10. सोपि सहर्षं तथेति प्रतिपन्नायां S.; सोहं सहर्षं प्रति° G.—16. मयाकृतं W.—17. स्वां चिकीर्षसि G., W.—स एष करतव W.—21. सानन्दं निर्दिश्य C., W., S.; we accdg. to G., Ah[d].; गतोभूत् W., C.—22. एव om. W., C., S., G.; we accdg. to Pa[d].

पार्थिवाय निवेदिता । स चार्थपतिमाहूयोपह्वरे पृष्टवान् । अङ्ग किमस्ति कश्चिद्विमर्दको नामात्रभवत इति । तेन च मूढात्मनास्ति देव परं मित्रन् कश्च तेनार्थ इति कथिते राज्ञोक्तम् । अपि शक्तोपि तमाह्वातुमिति । बाढमस्मि शक्त इति निर्गत्य स्वगृहे वेशवाटे द्यूतसभायामापणे च निपुणमन्विष्यन्नोपलब्धवान् । कथं चोपलभेत स वराकः । स खलु विमर्दको मद्राहितत्वदभिज्ञानचिह्नो मन्नियोगात्त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत । अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधमात्मसंबद्धं मत्वा मोहाद्भयाद्वा प्रत्याख्याय पुनर्धनमित्रेण विभाविते कुपितेन राज्ञा निगृह्य निगडबन्धनमनीयत ।

तेष्वेव दिवसेषु विधिना कल्पोक्तेन चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणीभूतविरूपकं रहस्युपसृत्य ततोऽपहृतं सर्वमर्थजातं तस्मै प्रत्यर्प्य सप्रश्रयं च बह्वनुनीय प्रत्यागमत् । सोऽपि कथंचिन्निर्ग्रन्थिकग्रहान्मोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्ममेव प्रत्यपद्यत । काममञ्जर्यपि कतिपयैरेवाहोभिरश्मन्तकशेषमजिनरत्नदोहाशया स्वमभ्युदयमकरोत् । अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथो व्यज्ञापयत् । देव येयं गणिका काममञ्जरी लोभोत्कर्षाल्लोभमञ्जरीति लोकोपक्रोशपात्रमासीत्साद्य मुसलोलूखलान्यपि निरपेक्षं त्यजति । तन्मन्ये मच्चर्मरत्नलाभहेतु । तस्य खलु कल्पस्तादृशः । वणिग्भ्यो वारमुख्याभ्यश्च दुग्धे नान्येभ्य इति हि तद्गता प्रतीतिः । अतोऽमुष्यामस्ति मे शङ्केति । सा सद्य एव राज्ञा सह जनन्या समाहूयत । व्यथितवर्णेनेव मयोपह्वरे कथितम् । नूनमार्ये सर्वस्वत्यागादतिप्रकाशादाशङ्कनीयचर्मरत्नलाभा तदनुयोगायाङ्गराजेन समाहूयसे ।

---

2. परमं W.— 4. च om. G.; कथं वो° C.— 6. °अभिज्ञानचिह्नो Pa[d].— 7. °अपराधं नाम मत्संबन्धीति W.; आत्मसंबन्धीति C., S., G.— 9. विभावितेन C., W., G., S. we accdg. to Pa[d]. and Ah[d].— 10. विधिकल्पेन W.— 11. तदपहृतं W. —12. सप्रत्ययं बहू° G., C., W., and Pa[d]. v. l.— 13. निर्ग्रन्थाग्रहा° Bhû., Ah[d].— 14. कतिपयैरिव W.— 18. °लाभहेतुस्त° W.; °लाभहेतुकं G.; °लाभहेतं S.; लाभं हेतुं C.— 21 सर्वस्य W.

भूयोभूयश्च निर्बन्धया त्वया नियतमस्मि तदागतिस्त्वेनाहमपदेश्यः। ततश्च मे भावी चित्रवधः। मृते च मयि न जीविष्यत्येव मे भगिनी त्वं च निःस्वीभूता। चर्मरत्नं च धनमित्रमेव प्रति-भजिष्यति। तदियमापत्समन्ततोऽनर्थानुबन्धिनी। तत्किमत्र प्रति-विधेयमिति। तया तज्जनन्या चाश्रूणि विसृज्योक्तम्। अस्त्येवै-तदस्मद्भाग्यानिर्भिन्नमार्य रहस्यम्। राज्ञश्च निर्बन्धाद्धिस्त्रिश्चतुर्नि-तुल्यापि नियतमागतिरपदेश्यैव चोरितस्य त्वयि। त्वयि त्वपदिष्टे सर्वमस्मत्कुटुम्बमवर्तिष्ट। अर्थपतौ च तदपयशो लग्नम्। अङ्गपुर-प्रसिद्धं च तस्य कीनाशस्यास्माभिः संगतम्। अमुनैव तदस्मद्-दत्तमित्यपदिश्य वरमाल्ला गोपायितुमिति मामभ्युपगमय्य राजकुलम-गमताम्। राजानुयुक्ते च नैव न्याय्यो वैशकुलस्य वक्तुरपदेशः। न चार्थैर्न्यायार्जितैरेव पुरुषा वेशमुपतिष्ठन्तीत्यसकृदभियुज्य कर्णनासाच्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां स एव तपस्वी तस्करत्वेनार्यपतिरभ्याख्यात। कुपितेन च राज्ञा तस्य प्रागभ्युद्यतो दण्डः। प्राञ्जलिना धनमित्रेणैव प्रत्यषिध्यत। आर्य नैर्घृण्य एव वरो वणिजामीदृशेष्वपराधेष्वसुभिरवियोगः। यदि कुपितोऽसि हृतसर्वस्वो निर्वासनीयः पाप एष इति। तन्मूला च धनमित्रस्य कीर्तिरजायत। अनीयत च भर्ता। पटच्चरच्छेदशेषोऽर्थपतिरर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत। तस्यैव द्रव्याणां केनचिदवयवेन सा वराकी काम-मञ्जरी चर्मरत्नमृगतृष्णिकापविद्धसर्वस्वा सानुकम्पं धनमित्राभिनो-दितेन भूपेनान्वगृह्यत। धनमित्रश्चाहनि गुणिनि कुलपालिकामुपा-यंस्त। तदेवं सिद्धसंकल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम्।

1. निर्बन्धेनैतोऽस्मि W.; तदागत्येन मामहं W.— 4. °द्विगुणं, सङ्कटमनिता S., G.; तत् om. S., G.— 6. निर्भिन्नेदूरं W.; C., we acedg. to Bhû., G., S. अतिनि-ष्टुर W., C.S., G., we accdg. to Pa[d]., Bhû., Ah[d].,— 7. त्वयि न स्वन देहे W.— S. अयशः C., S., W.— 9. अमुनैतत् W.— 10. अन्येदत Bhû.— 12 अभिनन्दद G., S., Pa[d]. v. 1.— 15. देव for आर्य M.— 16. नास्त्यन्योऽभिसम्भिवेण C., S.— 17. च om. W.— 19. तक्षमाणे C., S., G.; अभिनोदितेन W., C., S.

अस्मिंश्च पुरे लुब्धसमृद्धवर्गस्तथा मुषितो यथा कपालपाणिः स्वैरेव धनैर्मद्विश्राणितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत् । न च्चलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् । यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः प्रणयसमर्पितमुखमधुगण्डूषमास्वादमास्वादं मदेनास्पृक्ष्ये । शीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्मस्वेव प्रवर्तनम् । यदहमुपोढमदो नगरमिदमनयैकयैव शर्वर्या निर्धनीकृत्य त्वद्भवनं पूरयेयमिति प्रत्यर्थितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्ती मत्तवारण इव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्ययानुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेणोदचलम् । अभिपततोऽपि नागरिकपुरुषानशङ्कमेव विगृह्य तस्कर इति तैरभिहन्यमानोऽपि नातिप्रकुपितः क्रीडन्निव मदावसन्नहस्तपतितेन निस्त्रिंशेन त्रिचानेव हत्वाघूर्णमानताम्रदृष्टिरपतम् । अनन्तरमार्तरवान्विसृजन्ती शृगालिका ममाभ्यासमगमत् । अबध्ये चाहमरिभिः । आपदा तु मदापहारिण्या सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम् । अहो ममेयं मोहमूला महत्यापदापतिता । प्रस्ततरं च सख्यं मया सह धनमित्रस्य मत्परिग्रहत्वं च रागमञ्जर्याः । मदेनसा च तौ प्रोर्णुतौ श्वो नियतं निग्राहयिष्येते । तदियमिह प्रतिपत्तिर्ययानुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते । मां च कदाचिदनर्थाढितस्तारयिष्यत इति । कमप्युपायमात्मनैव निर्णीय शृगालिकामगादियम् । अपेहि जरतिके या तामर्थलुब्धां दग्धगणिकां रागमञ्जरिकामजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण संगमितवती सा हतासि । तस्य पापस्य चर्मरत्नमोपाहुहितुश्च ते

3. नियतिलिखितं W.—4. यापितायाः W.; पुनः पुनः प्रणय° C., S., G.; but wrong on account of आस्वादमास्वादं.— 6. अनुचितकर्मसु S.; उपाचित° Bhû.— 7. तदहं G., S.— 9. धूर्तया धात्र्या S.— 11. यत्रावगाह्य S., W., C., G.; we accdg. to Bhu. and Pa[d].; अपि om. W.— 12. घूर्णमानताम्र° G., S.— 16. प्रथिततरं च मया G., S.— 19. तारयिष्यन्तीति W., G.; °तीति C.;— 20. अत्रादिदं W.; या त्वं G.

ताराभरणापहारादहमद्य निःशल्यमुत्सृजेयं जीवितमिति । सा पुनरुद्घटितज्ञा परमधूर्ता साश्रुगद्गदमुदञ्जलिस्तान्पुरुषान्सप्रणाममासादितवती सामपूर्वं मम पुरस्तादयाचत । भद्रकाः प्रतीक्षध्वं कंचित्कालं यावदस्मादस्मदीयं सर्वं मुषितमर्थजातमवगच्छेयमिति । तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य सौम्य क्षमस्वास्य दासीजनस्यैकमपराधम् । अस्तु सकामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः । स्मरंस्तु चिरकृतां ते परिचर्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । आकल्पसारो हि रूपाजीवोजनः । तद्ब्रूहि क्व निहितं तस्या भूषणमिति पादयोरपतत् । ततो दयमान इवाहमब्रवम् । भवतु मृत्युहस्तवर्तिनः किं ममामुष्या वैरानुबन्धेनेति । तद्ब्रुवन्निव कर्ण एवैनामशिक्षयमेवमेव प्रतिपत्तव्यमिति । सा तु प्रतिपन्नार्थैव जीव चिरं प्रसीदन्तु ते देवता देवोऽप्यङ्गराजः पौरुषप्रीतो मोचयतु त्वामेतेऽपि भद्रमुखास्त्वद्दयन्तामिति क्षणादपासरत् । आनीये चाहमारक्षिकनायकस्य शासनाच्चारकम् ।

अथोत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरंमन्यः पितुरत्ययादचिराधिष्ठिताधिकारस्तारुण्यमदादनतिपक्वः कान्तको नाम नागरिकः किंचिदिव भर्त्सयित्वा समभ्यधत्त । न चेद्धनमित्रस्याजिनरत्नं प्रतिप्रयच्छसि न चेद्वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि द्रक्ष्यसि परमष्टादशानां कारणानामन्ते च मृत्युमुखमिति । मया तु स्मयमानेनाभिहितम् । सौम्य यद्यपि दद्यामाजन्मनो मुषितं धनं न त्वर्थपतिदारापहारिणः शलोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम् । अद्यैव तदयुतमपि यातनानामनुभवेयम् । इयं मे साधीयसी संधेति । तेनैव क्रमेण वर्तमाने सान्त्वनतर्जनप्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात्कतिपयैरेवाहोभिर्विरोपितव्रणः प्रकृतिस्थोऽहमासम् ।

1. उद्घटितज्ञाना S.— 3. प्रतीक्ष्यताम् C., W.— 4. प्रतिपन्ना S.— 8. रूपाजीवी W. रूपाजीवा S., अस्या C., W.— 10. अमुष्यां S., C., G.; इव om. C., G., S.— 13. आरक्षक° Bhû.— 17. स समभ्यधत्त W., C.— 18. न चेत्तु नागरिके° S.— 23. तेन च W.

अथ कदाचिदच्युताम्बरपतितपत्त्विषि क्षयिणि वासरे हृष्टवर्णा शृगालिकोज्ज्वलेन वेषेणोपसृत्य दूरस्थानुचरा मामुपाश्लिष्याब्रवीत्। आर्य दिष्ट्या वर्धसे। फलिता तव सुनीतिः। यथा त्वयादिष्टं तथा धनमित्रमेत्याब्रवम्। आर्य तवैवमापन्नः सुहृदुवाच। अहमद्य वेशसंसर्गसुलभात्पानदोषाद्बद्धः। त्वया पुनरविशङ्कमद्यैव राजा विज्ञापनीयः। देव देवप्रसादादेव पुरापि तदजिनरत्नमर्थपतिमुषितमासादितम्। अथ तु भर्ता रागमञ्जर्याः कश्चिदक्षधूर्तः कलासु कवित्वेषु लोकवार्त्तासु चातिवैचक्षण्यान्मया समसृज्यत। तत्संबन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्यां प्रतिदिनमन्ववर्ते। तदसावशङ्किष्ट निकृष्टाशयः कितवः। तेन च कुपितेन हृतं तच्चर्मरत्नमाभरणसमुद्गकश्च तस्याः। स तु भूयः स्तेयाय भ्रमन्नगृह्यत नागरिकपुरुषैः। आपन्नेन चामुनानुसृत्य हृदत्यै रागमञ्जरीपरिचारिकायै पूर्णप्रणयानुवर्तिना तद्भाण्डनिधानोद्देशः कथितः। ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादैः प्रसादः कार्य इति। तथा निवेदितश्च नरपतिरसुभिर्मामवियोज्योपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते। तन्नः पथ्यमिति। श्रुत्वैव च त्वदनुभावप्रत्ययादनतिलघुना तेन तत्तथैव संपादितम्। अथाहं त्वदनुभावप्रत्यायिताया रागमञ्जर्याः सकाशाद्यथेप्सितानि वस्तूनि लभमाना राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकां त्वदादिष्टेन मार्गेणान्वरञ्जयम्। तामेव संक्रमीकृत्य रागमञ्जर्याश्चाम्बालिकायाः सख्यं परमवीवृधम्। अहरहश्च नवनवानि प्राभृतान्युपहरन्ती कथाश्चित्राश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम्। एकदा च हर्म्यगतायास्तस्याः स्थानस्थितमपि कर्णकुवलयं स्रस्तमिति प्रतिसमादधती प्रमत्तेव प्रच्याव्य पुनरुत्क्षिप्य भूमेस्तेनोपकन्यापुरं कारणेन केनापि भवनाङ्गणं प्रविष्टस्य कान्तकस्योपरि प्रवृत्त-

3. यथा तदा त्वया° S.— 4. आपन्नसुहृदमुना चैवमादिष्टोसि W.; G.: इत्युवाच C.— 5. पुनरपि विशङ्कं W.; त्वामेते W.— 9. निकृष्टाशयतया G., S., W.— 10. समुद्गकं S., G.; C.— 16. तेन तथैव G.; तेनैतत्तथैव S.— 22. हर्म्याङ्गणगता° W.— 23. मादधती B.—M. omits पुनरुत्क्षिप्य भूमेः।

केनचित्तु हस्तवर्तिकागारिकेण तावतीं सुरुङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरिष्टादस्मदायत्तैव रक्षा। रक्ततरो हि तस्याः परिजनो न रहस्यं भेत्स्यतीति। सोऽब्रवीत्। साधु भद्रे दर्शितम्। अस्ति कश्चित्तस्करः खननकर्मणि सगरसुतानामिवान्यतमः। स चेल्लभ्येत क्षणेनैतत्कर्म साधयिष्यतीति। कतमोऽसौ किमिति न लभ्यत इति मयोक्ते येन तद्धनमित्रस्य चर्मरत्नं मुषितमिति त्वामेव स निरदिक्षत्। यद्येवमेहि त्वयास्मिन्कर्मणि साधिते चित्रैरुपायैस्त्वामहं मोचयिष्यामीति शपथपूर्वं तेनाभिसंधाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा योऽसौ चौरः स सर्वथोपक्रान्तो न तु धार्ष्ट्यभूमिः प्रकृतवैरस्तदजिनरत्नं दर्शयिष्यतीति राज्ञे विज्ञाप्य चित्रमेनं हनिष्यसि। तथा च सत्यर्थः सेत्स्यति रहस्यं च न स्रवतीति मयोक्ते सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने नियुज्य बहिरवस्थितः। प्राप्तरूपमतः परं चिन्त्यतामिति।

प्रीतेन च मयोक्तम्। यदुक्तमल्पम्। त्वनय एवात्र भूयान्। आनयैनमिति। अथानीतेनामुना मन्मोचनाय शपथः कृतो मया च रहस्यानिर्भेदाय। विनिगडीकृतश्च स्नानभोजनविलेपनान्यनुभूय नित्यान्धकारात्कारामित्तिकोणादारभ्योरगास्येन सुरुङ्गामकरवम्। अचिन्तयं चैवम्। हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः। तदमुं हत्वापि नासत्यवाददोषेण स्पृश्य इति। निष्पततश्च मे निगडनाय प्रसार्यमाणपाणेस्तस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरो न्यकृन्तम्। अकथयं च शृगालिकाम्। भण भद्रे कथंभूतः कन्यापुरसंनिवेशो महानयं प्रयासो वृथैव मा भूत्। अमुत्र किंचिच्चोरयित्वा निवर्तिष्य इति। तदुपदर्शितविभागं चावगाह्य

1. सुरंगां G., Pa[d].— 6. न. om. W., C., S., यद्येवमेव W.— 8. तेन संधाय W., C.— 9. प्रकृतनः प्रकृष्ट° C., W., S.— 10. घातयिष्यसि C., W., S.— 12. प्राप्तं we accdg. to G., Ah[d]. and Pa[d].; इतः W., C., S.— 15. नित्यान्धकारात्कारमित्ति° W.— 17. तदेनं seems to be the reading of Pa[d].— 19. तस्य om. G., S. sec. m.— 21. मा वृथैव भूत् G., W., C.— 22. तदुपदर्शितविभागञ्च C., W.— 22. कन्यान्तःपुरं W., C.

कन्यापुरे प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परिजनस्य मध्ये महितमहार्घरत्नप्रत्युप्तसिंहाकारदन्तपादे हंसतूलगर्भकोमलशय्योपधानशालिनि कुसुमलवच्छुरितपर्यन्ते पर्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवलितेतरचरणाग्रपृष्ठमीषद्विवृतमधुरगुल्फसंधि परस्परश्लिष्टजङ्घाकाण्डमाकुञ्चितकोमलोभयजानु किंचिद्वेल्लितोरुदण्डयुगलमधिनितम्बस्रस्तमुक्तैकभुजलताग्रमपाश्रयान्तनिमिताकुञ्चितेतरभुजलतोत्तानतलकरकिसलयमाभुग्नश्रोणिमण्डलमतिश्लिष्टचीनांशुकान्तरीयमनतिवलिततनुतरोदरमणुतरनिःश्वासारम्भकम्पमानकठोरकुचकुड्मलमातिरश्चीनबन्धुरशिरोधरोद्देशदृश्यमाननिष्टप्ततपनीयसूत्रपर्यस्तपद्मरागरुचकमर्धलक्ष्याधरकर्णपाशनिभृतकुण्डलमुपरिपरावृत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरीपिञ्जरितविषमव्याविद्धशिथिलशिखण्डबन्धमात्मप्रभापटलदुर्लक्ष्यपाटलोत्तराधरविवरं गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णावतंसकृत्यमुपरिकपोलादर्शतलनिषिक्तचित्रवितानपत्त्रजातिजनितविशेषकक्रियमामीलितलोचनेन्दीवरमविभ्रान्तभ्रूपताकमुद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकमाननेन्दुसंमुखागतालकलतं च विश्रब्धप्रसुप्तामतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वतया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामिनीं राजकन्यामपश्यम्। दृष्ट्वैव स्फुरदनङ्गरागचकितश्चोरयितव्यनिःस्पृहस्तयैव तावच्चोर्यमाणहृदयः किंकर्तव्यतामूढः क्षणमतिष्ठम्। अतर्कयं च। न चेदिमां वामलोचनामामुयां न मृष्यति मां जीवितुं वसन्तबन्धुः। असंकेतितपरामृष्टा चेयमतिबाला व्यक्तमार्तस्वरेण निहन्यान्मे मनोरथम्। ततोऽहमेवाग्नीय।

1. [illegible] W.—महति महार्हे° G., C., S.; महार्हरत्न° C., W.; we accdg. to Pa[d].— 3. °च्छुरितपर्यन्ते G., S. °अनुवेल्लितेतर° Bhû., W.; we accdg. to Ah[d]., Pa[d]., S., G.— 4. °विवृत्त° W.— 5. कोमल° om., W.— 6. °लतामपेक्षाले W., C., S.; °निहिताकुञ्चित C., W., S. pr. m.; निर्मित° G.; निभित्त° Pa[d]., Ah[d]., Bhû.— 7. अतनुतरात्रे· Pa[d]., °श्वासा° Bhû.— 11. °धरबिम्बे M.— 12. कपोलदेश W.; °पत्त्रक्रियाजनित° Ah[d]., Bhû., G.— 15. °संमुखालकं° W., C.— 16. °निमग्नां° W.— 20. जीवन्तं- 21. आर्तरवेण W., C., S.; आर्धय इति W.—आर्गले Pa[d]., G., Bhû: but add निर्ट°.

तदियमत्र प्रतिपत्तिरिति । नागदन्तलग्ननिर्यासकल्कवर्णितं फलकमादाय मणिसमुद्गकाच्चूर्णवर्तिकां समुद्धृत्य तां तथा शयानां तस्याश्च मामा बद्धाञ्जलि चरणलग्नमालिखमार्यां चैताम् ।

त्वामयमाबद्धाञ्जलि दासजनस्तामिममर्थमर्थयते ।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम् ॥

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां पारिजातकं चोपयुज्यालक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम् । अङ्गुलीयकविनिमयं च कृत्वा कथंकथमपि निरगाम् । सुरुङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्यैवं मया हतस्तपस्वी कान्तकस्त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्ष इत्युपदिश्य सह शृगालिकया निरक्रमिषम् । नृपतिपथे च समापत्य रक्षिकपुरुषैरगृह्ये । अचिन्तयं च । अलमस्मि जवेनापसर्तुमनामृष्ट एवैभिरेषा पुनर्वराकी गृह्येत । तदिदमत्र प्राप्तरूपमिति । तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा यद्यहमस्मि तस्करो भद्रा बध्नीत मां युष्माकमयमधिकारो न पुनरस्या वर्षीयस्या इत्यवादिषम् । सा तु तावतैवोन्नीतमदभिप्राया तान्सप्रणाममभ्येत्य भद्रमुखा ममैष पुत्रो वायुग्रस्तश्चिरं चिकित्सितः पूर्वेद्युः प्रसन्नकल्पः । प्रकृतिस्थ एव जातो जातास्थया मया बन्धनान्निष्क्रमय्य स्नापितोनुलेपितश्च परिधाप्य निष्प्रवाणियुगलमभ्यवहार्य परमान्नमौशीरेद्य कामचारः कृतोऽभूत् । अथ निशीथे भूय एव वायुनिघ्नो निहत्य कान्तकं नृपतिदुहितारमेयमिति रंहसा परेण राजपथमभ्यपतत् । निरूप्य चाहं पुत्रमेवंगतमस्यां वेलायामनुधावामि । तत्प्रसीदत बद्ध्वैनं मह्यमर्पयतेति यावदसौ क्रन्दति तावदहं स्थविरे केन देवो मातरिश्वा बद्धपूर्वः किमेते काकाः

1. निर्यासवालुका° W., S.— 2. उद्धृत्य W.— 2. आबद्धांजलि om. G.; °लि W., C.— 5. मदनव्यतिकर° W.— 11. प्रतिभिद्य B.; आदिश्य S.— 12. समागत्य W., C.— 17. तावतोन्नाति° W., C., S.— 18. अभिगम्य W.; अभ्यु-पेत्य C., S.

शौङ्गेयस्य मे निग्रहीतारः। शान्तं पापमित्यधावम्। असावप्यनीभिस्त्वमेवोन्मत्ता याऽनुन्मत्त इत्युन्मत्तं मुक्तवती कस्तमिदानीं बध्नातीति कदर्थिता रुदत्येव मामन्वधावत्। गत्वा च रागमञ्जरीगृहं चिरविरहखेदविह्वलामिमां बहुविधं समाश्वास्य तं निशाशेषमनयम्। प्रत्यूषे चोदारकेण समगच्छे।

अथ भगवन्तं मरीचिं वेशकृच्छ्रादुत्थाय पुनः प्रतितप्रतपःप्रभावप्रत्यापन्नदिव्यचक्षुषमुपसंगम्य तेनास्म्येवंभूतं त्वद्दर्शनमवगमितः। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितस्तेनैव चारकसुरुङ्गापथेन कन्यापुरप्रवेशं भूयोपि मे समपादयत्। समगंसि चाहं शृगालिकामुखविसृतवार्त्तानुरक्तया राजदुहित्रा। तेष्वेव दिवसेषु चण्डवर्मा सिंहवर्मविधूतदुहितृप्रार्थनः कुपितोभियुज्य पुरमरुणत्। अमर्षणश्चाङ्गराजो यावदरिः पारग्रामिकं विधिमाचिकीर्षति तावत्स्वयमेव सालं निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति संपराये भिन्नवर्मा सिंहवर्मा बलादगृह्यत। अम्बालिका च बलवदभिगृह्य चण्डवर्मणा परिणेतुमात्मभवनमनीयत। कौतुकं च स किल क्षपावसाने विवाह इत्यबध्नात्। अहं च धनमित्रगृहे तद्विवाहायैव पिनद्धमङ्गलप्रतिसरस्तमेवावोचम्। सखे समापतितमेवाङ्गनाथाभिसरं राजमण्डलम्। सुगूढमेव संभूय पौरवृद्धैस्तदुपावर्तय। उपावृत्तश्च कृत्तशिरसमेव शत्रुं द्रक्ष्यसीति। तथेति तेनाभ्युपगते गतायुषोऽमुष्य भवनमुत्सवाकुलमुपसमाधीयमानपरिणयोपकरणमितस्ततः प्रवेशनिर्गमप्रवृत्तलोकसंबाधमलक्ष्यशस्त्रिकैः सह प्रविश्य मङ्गलपाठकैरम्बालिकापाणिपल्लवमग्नौ साक्षिण्यार्यवर्गेन

3. निन्दिता कदर्थिता W., C., S.— 4. चिरवियोगविक्लवां W., C., S., विक्लवां also Bhû., Ah[d]., we accdg. to G., Pa[d].— 5. प्रभाते पुनरुदारकेण च W., C.; प्रत्यूषे तु च S.; we accdg. to G. and Pa[d].— 6. प्रतिपन्नतप॰ W., C, S.— 7. उपसंक्रम्य W., C.— 12. पारग्रामिकं seems to be the original reading of Bhû.— 13. प्राकारं Pa[d].— 14. भिन्नमर्मा W., C.— 15. अम्बालिकां Pa[d]. ॰ह्यात्मपरिणेतुं G., C.— 19. उपावृत्तश्च कृतकृत्य W.; तथा च तेन W., C., S.— 21. ॰लोकमङ्गलं W., C.

विधिनार्प्यमाणमादित्समानस्यायामिनं बाहुदण्डमाकृष्य च्छुरिकयोरसि प्राहार्षम् । स्फुरतश्च कतिपयानन्यानपि यमविषयमगमयम् । हतविध्वस्तं च तद्गृहमनुविचरन्वेपमानमधुरगात्रीं विशाललोचनामभिनिशाम्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविक्षम् । अस्मिन्नेव क्षणे तवास्मि नवाम्बुवाहस्तनितगम्भीरेण स्वरेणानुगृहीत इति ।

श्रुत्वा च स्मित्वा च देवोपि राजवाहनः कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्त इत्यभिधाय पुनरवेक्ष्योपहारवर्माणमाचक्ष्व तवेदानीमवसर इत्यभाषत । सोपि सस्मितं प्रणम्यारभताभिधातुम् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेपहारवर्मचरितं नाम द्वितीय उच्छ्वासः ॥

---

5. स्तनित° om. S., W., C.—7. पुनर्निरीक्ष्य W.—8. C., W., S. place the last sentence at the beginning of the next Uchchhvâsa.

## ॥ अथ तृतीय उच्छ्वासः ॥

एषोऽप्यहमस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि । ततस्तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । किमेतदम्ब कथय कारणमिति पृष्टा सकरुणमाचष्ट । जैवातृक ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे बलशम्बरयोरिव वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्षितां गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नमाणितः स्वविषयं प्रति निवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राष्ट्रमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र मे शार्दूलनखावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादालिक्षत् । भिल्लदारकैः स बालकोऽपाहारि । सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वकुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमन-

1. अस्मि om. S.; अप्यहम् om. Pa[d].— 3. बद्धधार W., C., S., G.— 7. भदद्तां W. अदधतां G.; S. sec. m.; अदधातां C., S. Pr. m.; we accdg. to Pa[d].— 9. अस्मिन्नेव C., W.— 10 दुर्लक्षां C.— 12. राज्यं C.— 19. स्वं कुटीरं C— 22. सा om. G., S.— 22. भर्तृ° om. W., we accdg. to S., G., C., Pa[d].

मात्मनश्च केनापि वनचरेण व्रणविरोपणं स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तिताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यं तदक्षमेण चामुना विविक्तविपिने स्वशिरःकर्तनोद्यममनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननमात्मनश्चोपयमनमित्यकथयत् । स तु पृष्टो मिथिलेन्द्रस्य कोपि सेवकः कारणविलम्बी तन्मार्गानुसारी जातः । सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन ओत्रनस्य देव्याः प्रियंवदाया-श्चादहाव ।

स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतया-तिमात्रं प्रयुध्य बद्धः । देवी च बन्धनं गमिता । दग्धा पुनरहमस्मि-न्नपि वार्द्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीपम् । दुहिता तु मम हतजीवनाकृष्टा विकटवर्ममहादेवीं कल्पसुन्दरीं किलाशिश्रियत् । तौ चेद्राजपुत्रौ निरुपद्रवाववर्धिष्येतामियता कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम् । तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुरिति प्रमन्युरभिरुरोद । श्रुत्वा च तां तापसी-गिरमहमपि प्रवृद्धवाष्पो निगूढमभ्यधाम् । यद्येवमम्ब समा-श्वसिहि । नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्धितश्च । वार्त्तेयमतिमहती । किमनया । सोहमस्मि । शक्यश्च मयासौ विकटवर्मा यथाकथंचिदुपश्लिष्य व्यापा-दयितुम् । अनुजाः पुनरतिबहवस्तैरपि घटन्ते पौरजानपदाः । मां तु न कश्चिदिहत्य ईदृक्तया जानाति । पितरावपि तावन्मां न संविदाते

---

3. विविक्तविपिने W., C., S.— तेन C.— 4. स च W., C., S.— 5. मिथिलेन्द्रस्यैव C., S., बभूव W.— 6. स्वभर्तुः G., W.— 8. दिष्टदोषज्ये° W.— 9. अतिमात्रं चिरं S., C.— 10. हत° om. all Mss. except G., Pa[d]., Bhû.— 11. हतजीविता. W., C., °जीविका G.; we accdg. to S.; °कृष्टा om. S.; विकटवर्ममहिषीं. W., C., S.; we accdg. to G., Pa[d]., Bhû.— 12. निरुपद्रवावेव C., S.— 14. W. puts न before भवेयुः; प्रवृद्धमन्युः W., C., S., Bhû.; we accdg. to G., Pa[d]., Ah[d]., G.; तां om. C., S.— 16. तदवस्थया om. W.— 17. अतिमहती हि W.—अतिमहीति S.— 20. जनो जानाति C.; S.; यावत् W.; Bhû., Ah[d].—20. प्रतिसंविदाते G., W.

किमुतेतरे । तदेनमर्थमनुपायेन साधयिष्यामीत्यगादिषम् । सा तु वृद्धा सरुदितं परिष्वज्य मुहुर्मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत् । वत्स चिरं जीव । भद्रं तव । प्रसन्नोद्य भगवान्विधिः । अद्यैव प्रहारवर्मण्यपि विदेहा जाताः । यतः प्रलम्बमानपीनबाहुर्भवानपारं चैतच्छोकसागरमद्योत्तारयिता स्थितः । अहो महद्भागधेयं देव्याः प्रियंवदाया इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत् । अशिश्रियं चास्मिन्मठैकदेशे निशि कटशय्याम् । अचिन्तयं च । विनोपधिनायमर्थो न साध्यः । स्त्रियश्चोपधीनामुद्भवक्षेत्रम् । अतोन्तः पुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किंचिज्जालमाचरेयमिति ।

चिन्तयत्येव मयि महार्णवोन्मग्नमार्तण्डतुरंगमश्वासरयावधूतेव व्यावर्तत त्रियामा । समुद्रगर्भवासजडीकृत इव मन्दप्रतापो दिवसकरः प्रादुरासीत् । उत्थायावसायितदिनमुखनियमविधिस्तां मे मातरमवादिषम् । अम्ब जाल्मस्य विकटवर्मणः कच्चिदन्तःपुरवृत्तान्तमभिजानासीत्यनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत । तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठमाचष्ट । पुत्रि पुष्करिके पश्य भर्तृदारकम् । अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागत इति । सा तु हर्षनिर्भरपीडिता चिरं प्ररुद्य बहु विलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत । उक्तं च तया । कुमार कामरूपेश्वरस्य कलिन्दवर्मनाम्नः कन्या कल्पसुन्दरी कलासु रूपे चाप्सरसोप्यतिक्रान्ता पतिमभिभूय वर्तते । तदेकवल्लभः स तु बह्ववरोधोपि विकटवर्मेति । तामवोचम् । उपसर्पैनां मत्प्रयुक्तैर्गन्ध-

---

2. [illegible] C., S.— 3. [illegible] C., W., [illegible] S.—4. [illegible]° W., C.: [illegible] S.— [illegible]° Ar.; we accdg. to G., Pa[d].—[illegible] W. C., Ar.— 6 [illegible] S.— 7. [illegible] W., C., Ar., Ab[d].— 10. [illegible] W., C., S., Ar.: [illegible]° W., C., Ar., [illegible] S.; [illegible]° C., W., S.—11. [illegible] W.— 15. [illegible] W. °[illegible] S., C.— 17. [illegible] om. W., S — 21. °[illegible] W., G. Bhn.; [illegible] Ar.; [illegible] W.

माल्यैः। उपजनय चासमानदोषनिन्दादिना स्वभर्तरि द्वेषम् । अनुरूपभर्तृगामिनीनां वासवदत्तादीनां वर्णनेन ग्राहयानुशयम् । अवरोधान्तरेषु च राज्ञो विलसितानि सुगूढान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मानमस्या वर्धयेति । पुनरहमम्बामवोचम् । इत्थमेव त्वयाप्यनन्यव्यापारया नृपाङ्गनासावुपस्थातव्या । प्रत्यहं च यद्यत्तत्र वृत्तं तदस्मि त्वयाववोध्यः । मदुक्त्या पुनरियमुदर्कस्वादुनोस्मत्कर्मणः प्रसाधनाय च्छायेवानपायिनी कल्पसुन्दरीमनुवर्ततामिति । ते च तमर्थं तथैवान्वतिष्ठताम् ।

केषुचिद्दिनेषु गतेष्वाचष्ट मां मदम्बा । वत्स माधवीव पिचुमन्दाश्लेषिणी यथासौ शोच्यमात्मानं मन्यते तथोपपाद्य स्थापिता । किं भूयः कृत्यमिति । पुनरहमभिलिख्यात्मनः प्रतिकृतिमस्मत्प्रातिकृतिरियममुष्यै नेया । नीतां चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति । नन्वस्ति कश्चिदीदृशाकारः पुमानिति । प्रतिब्रूह्येनाम् । यदि स्यात्ततः किमिति । यदुत्तरं सा दास्यति तदहमस्मि प्रतिबोधनीय इति । सा तथेति राजकुलमुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत् । वत्स दर्शितोसौ चित्रपटस्तस्यै मत्तकाशिन्यै । चित्रीयमाणा चासौ भुवनमिदं सनाथीकृतं येद्देवेपि कुसुमधन्वनि नेदृशी वपुःश्रीः संनिधत्ते । चित्रमेतच्चित्रतरम् । न च तमवैमि य ईदृशमिहल्यो निर्मिमीते । केनेदमालिखितमित्यादृतवती व्याहृतवती च । मया च स्मेरयोदीरितम् । देवि सदृशमाज्ञापयसि । भगवान्मकरकेतुरप्येवं सुन्दर इति न शक्यमेव संभावयितुम् । अथ च विस्तीर्णेयमर्णवनेमिः । क्वचिदीदृशमपि रूपं दैवशक्त्या संभवेत् । अथतु यद्येवंरूपो रूपानुरूपशिल्पशीलविद्याज्ञानकौशलो युवा महाकुलीनश्च कश्चित्संनिहितः स्यात्स

---

3. चामुष्य S., C., W., A^r.— 5. अपि om. S.— 6. वृत्तान्तं G.; वृत्तान्तं जातं W.; वृत्तजातं C.; we accdg. to S. & Pa^d.; त्वयैव बोध्यः Pa^d.— 9. पिचुमर्दः W., C.— 15. मह्यमेकान्ते S., G.— 17. येन देवे C., S., W., A^r., om. G.— 18. चित्रतमं W., G., S. sec. m., C., A^r.— 20. भगवानपि—केतरेव W.; एवं न सुकरः S., A^r.; अपि om. C.— 21. शक्यमेवं S., W.

किं लप्स्यत इति । तयोक्तम् । अम्ब किं ब्रवीमि । शरीरं हृदयं जीवितमिति सर्वमिदमल्पमनर्हं च । ततो न किंचिल्लप्स्यते । न चेदयं विप्रलम्भः स्यादमुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवेत्तथानुग्रहः कार्य इति । भूयोपि मया दृढतरीकर्तुमुपन्यस्तम् । अस्ति कोपि राजसूनुरवरुद्धश्चरन् । अमुष्य वसन्तोत्सवे सह सखीभिर्नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गतासि । गतश्चासौ कामशरैरेकलक्ष्यतां मामन्ववर्तिष्ट । मया च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तद्रचितैरेव शेखरस्रगनुलेपनादिभिश्च चिरमुपासितासि । सादृश्यं च स्वमनने स्वयमेवाभिलिख्य त्वत्समाधिगाढत्वदर्शनाय प्रेषितम् । एष चेदर्थो निश्चितः स्यादमुष्यातिमानुषप्राणसत्त्वप्रज्ञाप्रकर्षस्य न किंचिद्दुष्करं नाम । तमद्यैव दर्शयेयम् । संकेतो देय इति । तया तु किंचिदिव ध्यात्वा पुनरभिहितम् । अम्ब नैतदिदानीं गोप्यतममतः कथयामि । मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिरासीन्मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियंवदासीत् । ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोभूत् । आवयोः पुत्रवत्याः पुत्राय दुहितृमत्या दुहिता देयेति । तातस्तु मां जातां नष्टापत्या प्रियंवदेति प्रार्थयमानाय विकटवर्मणे दैवाद्दत्तवान् । अयं च निष्ठुरः पितृद्रोही नात्युपपन्नसंस्थानः कामोपचारेष्वलब्धवैचक्षण्यः कलासु काव्यनाटकादिषु मन्दाभिनिवेशः शौर्योन्मादी दुर्विकत्थनोनृतवादी चास्थानवर्षी । नातिरोचते ममैष भर्ता विशेषतश्चैषु वासरेषु । यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्तिनीमनादृत्य मय्याबद्धसापत्न्यमत्सरामनात्मज्ञामात्म-

---

1. एव किं ब्रवीमि W., किं ब्रवीमि S.; अंब किं ब्रवीमि Ar.—3. विप्रलंभतस्या S.; विप्रलम्भस्तस्या अमुष्य C.; स्यात् तस्या अमुष्य W.; we accdg. to G., Ar.; लप्स्यते Ar.; किं किं लप्स्यते. G.—5. निगूढं चरन् Pa[d].—8. कुसुमशेखर° W., C., Ar.—9. एतेन सार्धं Ar., तेन G.—10. °गाढदर्शनाय S., G., निश्चितस्तस्यामुष्य S., C., W., we accdg. to G., Ar.—13. अंब तव नै° C., S., गोप्यं S; W.—15. प्रियवयस्याः प्रियंवदायाश्च देव्याः W. against all the Mss. & Com.—17. नष्टापत्या S., C., W., Ar.—22. °मत्सरां Pa[d].?

नाटकीयां रमयन्तिकामनपत्यानिर्विशेषं मत्संवर्धितायाश्चम्पकलतायाः स्वयमवचिताभिः सुमनोभिरलमकार्षीन्मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत् । अयोग्यश्च पुमानवज्ञातुं च प्रवृत्तस्तत्किमित्यपेक्ष्यते । परलोकभयं चैहिकेन दुःखेनान्तरितम् । अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनचिरसंवासयन्त्रणादुःखम् । अतोमुना पुरुषेण मामद्योद्यानमाधवीगृहे समागमय । तद्वार्त्ताश्रवणमात्रेणैव हि ममातिमात्रं मनोनुरक्तम् । अस्ति चायमर्थराशिः । अनेनामुष्य पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामीति । मयापि तदभ्युपेत्य प्रत्यागतम् । अतः परं भर्तृदारकः प्रमाणमिति ।

ततस्तस्या एव सकाशादन्तःपुरसंनिवेशमन्तर्वंशिकपुरुषस्थानानि प्रमदवनप्रदेशानपि विभागेनावगम्यास्तगिरिशिखरपातक्षुभितशोणित इव शोणीभवति भानुबिम्बे पश्चिमाम्बुधिपयःपातनिर्वापितपतंगाङ्गारधूमसंभार इव भरितनभसि तमसि प्रविजृम्भिते परदारपरामर्शोन्मुखस्य ममाचार्यकमिव कर्तुमुत्थिते गुरुपरिग्रहग्रहणश्लाघिनि ग्रहाग्रेसरे क्षपाकरे कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन संधुक्षमाणतेजसि भुवनविजिगीषोद्यते देवे पुष्पधन्वनि यथोचितं शयनीयमभजे । व्यचीचरं च । सिद्धप्राय एवायमर्थः । किंतु परकलत्रलङ्घनाद्धर्मपीडा भवेत् । साप्यर्थकामयोर्द्वयोरुपलम्भे शास्त्रकारैरनुमतैवेति । गुरुजनबन्धमोक्षोपायसंधिना मया चैष व्यतिक्रमः कृतस्तदपि पापं निर्हृत्य कियत्यापि धर्मकलया मां समग्रयेदिति ।

---

1. नामपत्य° W., C.; अप्यपत्य° A$^r$.— 2. मदुपभुक्त°..... व्यहार्षीत् om. W.— 6. समागमयेति W.— 8. अमुं स्वपदे W.; स्वे पदे; S., C.—तमेवं W.; अपि om. W.— 11. °निवेशं Pa$^d$.— 12. °कूटपात° Pa$^d$.— 13. अम्भोधि°; W., C., S.; we accdg. to G., Pa$^d$.— 14. भरिततमासि नमसि Pa$^d$. विजृम्भिते W., C., S., G., A$^r$.; प्रजृम्भित G.— 15. कर्तुमुपस्थिते G., A$^r$.; गुरुपरिग्रहग्रहणगुणश्ला° S.; गुरुपरिग्रहणश्ला° C.— 17. त्रिभुवन° S., G., C., A.; we accdg. to Pa$^d$. & W.— 21. °मोक्षोपायाभिसंधिना G., C., W. Ah$^d$., Bhû. °सिद्धिना S.

अपि त्वेतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्तीति चिन्तापराधीन एव निद्रया परामृश्ये । अदृश्यत स्वप्ने हस्तिवक्त्रो भगवानाह स्म च । सौम्य उपहारवर्मन् मा स्म ते दुर्विकल्पो भूत् । त्वमसि मदंशः । शंकरजटाभारलालनोचिता सुरसरिदसौ वरवर्णिनी । सा च मद्विलोडनासहिष्णुर्मामशपत् । एहि मर्त्यत्वमिति । अशाप्यत मया च यथेह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भवेति । अभ्यर्थितश्चानयैकपूर्वा पुनस्त्वामेवोपचर्य यावज्जीवं रमेयमिति । तदयमर्थो भव्यो भवता निराशङ्कच इति । प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासंकेतव्यतिकरादिस्मरणेनाहमनैषम् । अन्येद्युरनन्ययावृत्तिरनङ्गो मय्येवेषुवर्षमवर्षत् । अशुष्यच्च ज्योतिष्मतः प्रभामयं सरः । प्रासरच्च तिमिरमयः कर्दमः । कार्दमिकानिवसनश्च दृढतरपरिकरः खड्गपाणिरुपहृतप्रकृतोपस्करः स्मरन्मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखानुदम्भसमुपातिष्ठम् । अथोपखातं मातृगृहद्वारे पुष्करिकया प्रथमसंनिधापितां वेणुयष्टिमादाय तया गाधितया च परिखां स्थापितया च प्राकारमत्यलङ्घयम् । अधिरुह्य पक्वेष्टकचितेन गोपुरो-

1. धर्मं कृ° C.; ममाभिहित् W.— 3. स्वप्ने भगवान्ननः C., Ar.— 4. मतस्त्वं Ar., C., W.— 4. गङ्गजटाभार° C., W., Ar.; तां कदाचिद्गजाननो जलक्रीडां कुर्वन्नतिव्यगाहत । सा च सपत्नीतनयविहितां विलोडनामसहमाना तम° C., W.; Ar.— 5. अनरत्तारित् S., C., W., Ar.— 6. सोप्यहमहेतुकशापप्रदानाक्कुद्धस्तामशपत् W., C., Ar.—Instead of अशाप्यत–रमयेयमिति C. & Ar. read ततस्तेन प्रतिशप्ता सा सविलक्षेव [विलक्षेव C.] मामुपसृत्य सगद्गदं [अगदत् C.] स्वामिन्ननवरतमवरणवरिवस्याविधायिनी न शापार्हेत्याक्रन्दं कृपाक्रान्तमनसा मयोक्तम् । [भिन्ने C.] मास्य शापोन्यथा भवितुमर्हति । परं त्वदनुप्रहार्थमहमात्मनेशां द्विधा विभज्य विकटवर्मनृपतिरूपेण [°पदभेन C.] मिथिलापतिप्रहारवर्मात्मजोपहारवर्मात्मना च मर्त्यलोकेऽवतरिष्यामि त्वं च कामरूपाधि [पतेः C.] कलिन्दवर्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथममन्यपि परिणीता संगत्य [°ना C.] तस्मिन्नुपहारवर्मणि मन्मूर्तावेव [स्वम्°] न्ययमुपगते पुनरुपहारवर्मात्मकं कनीयांसं मदंशमुपलभ्य तेन साकं विविधसुखोपभोगमनुभविष्यसि. W. has neither our text nor the passage given in C. & Ar.— 10. अनन्यव्यावृत्ति. W., C.; °यावृत्तिः Ar.—12. अहं च कर्दमिक W.—°नुपसंभृतमस्तुत° W.—°पसंभृतमस्तुत° C.; S.; Ar.— 15. गच्छापितया W. against all Mss.; तया च om. W.; तया om. C.; परिखां W.; परिखामपि Ar.

परितलाधिरोहिणा सोपानपथेन भुवमवातरम् । अवतीर्णश्च बकुलवीथीमतिक्रम्य चम्पकावलीवर्त्मना मनागिवोपसृत्योत्तराहि करुणं चक्रवाकमिथुनरवमशृणवम् । पुनरुदीचा पाटलिपथेन स्पर्शलभ्यविशालसौधकुड्योदरेण शरक्षेपामिव गत्वा पुनः प्राचा पिण्डीभाण्डीरखण्डमण्डितोभयपार्श्वेन सैकतपथेन किंचिदन्तरमतिक्रम्य पुनरवाचीं चूतवीथीमगाहिषि । ततश्च गहनतरमुदरोपरचितरत्नवेदिकं माधवीलतामण्डपमीषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्या न्यरूपयम् । प्रविश्य चैकपार्श्वे फुल्लपुष्पनिरन्तरकुरण्टपोतपङ्क्तिभित्तिपरिगतं गर्भगृहमवनिपतितारुणाशोकशाखामयमभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कपाटमुद्घाट्य प्राविक्षम् । तत्र चासीद्विस्तीर्णं कुसुमशयनं सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसंपुटा दन्तमयस्तालवृन्तः सुरभिसलिलभरितश्च भृङ्गारकः । समुपविश्य मुहूर्तं विश्रान्तः परिमलमतिशयवन्तमाघ्रासिषम् । अश्रौषं च मन्दं मन्दं पदशब्दम् । श्रुत्वैव संकेतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गः स्थितोऽस्मि । सा च सुभ्रूरसुशीमकामा शनैरुपेत्य तत्र मामदृष्ट्वा बलवद्व्यथिष्ट व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरम् । व्यक्तमस्मि विप्रलब्धा । नास्त्युपायः प्राणितुम् । अयि हृदय किमिदमकार्यं कार्यवदध्यवस्यापि तदसंभवेन किमेवमुत्ताम्यसि । भगवन् पञ्चबाण कस्तवापराधः कृतो मया यदेवं दहसि न च भस्मीकरोषीति ।

अथाहमाविर्भूय विवृतदीपभाजनो भामिनि ननु बहुपराद्धं भवत्या चित्तजन्मनो यदमुष्य जीवितभूतां रतिमाकृत्या कदर्थितवती धनुर्यष्टिं

1. चावरुह्य A$^{r}$.— 2. °अधिरोहेण W., C., भुवमध्य° W.— 4. पाटलाप° C., A$^{r}$., W.; पाटली° S.; °विमलसौध° S., A$^{r}$.—5. °कुल्योदरेण C., A$^{r}$., °तुल्योदरेण W.— पुनरपि पिंडी° A$^{r}$.; किंचिदुत्तरं Pa$^{d}$.— 8. °विवृतसमुद्गकसंपुटको° S., A$^{r}$.; °संपुटो° W.— 9. भित्ति om. M.— 10. कोमलमुकुलपुलक° S., W.— 11. स्वास्तीर्ण Pa$^{d}$.— 12. मदनोपकरण° W.— 15. पार्श्व om. M.— 16. सुशीमकामा W., C., G., Pa$^{d}$.— सुषीम° S., A$^{r}$.; तत्र om. S., W.— 17. रंगराग° A$^{r}$.— 19. तदसंभवे S., C.; तदसंबन्धेन Pa$^{d}$.

भ्रूलताभ्यां भ्रमरमालामयीं ज्यां नीलालकद्युतिभिरस्त्राण्यपाङ्गवीक्षितवृष्टिभिर्महारजनध्वजपटांशुकं दशनच्छदमयूखजालैः प्रथमसुहृदं मलयमारुतं परिमलपटीयसा निःश्वासपवनेन परभृतरुतमतिमञ्जुलैः प्रलापैः पुष्पमयीं पताकां भुजयष्टिभ्यां दिग्विजयारम्भपूर्णकुम्भमिथुनमुरोजयुगलेन क्रीडासरो नाभिमण्डलेन संनाह्यरथमण्डलं श्रोणिमण्डलेन भवनरत्नतोरणस्तम्भयुगलमूरुयुगलेन लीलाकर्णकिसलयं चरणतलप्रभाभिः । अतः स्थान एव त्वां दुनोति मीनकेतुः । मां पुनरनपराधमधिकमायासयतीत्येष तस्य दोषः । तत्प्रसीद सुन्दरि जीवय मां जीवनौषधैरिवापाङ्गैरनङ्गभुजङ्गदष्टमित्याश्लिष्टवान् । अरीरमं चानङ्गरागावेशपेशलां विशाललोचनाम् । अवसितार्थां चारक्तविकूणितेक्षणामीषत्स्वेदरेखोद्भिदजर्जरितकपोलमूलामनर्गलकलकलप्रलापिनीमरुणदशनकररुहार्पणव्यतिकरामत्यर्थपरिश्लथाङ्गीमार्त्तामिव लक्षयित्वा मानसीं शारीरीं च धारणां शिथिलयन्नात्मानमपि तया समानार्थमापादयम् । तत्क्षणविमुक्तसंगतौ रतावसानिकं विधिमनुभवन्तौ चिरपरिचिताविवातिरूढविश्रम्भौ क्षणमवातिष्ठावहि । पुनरहमुष्णमायतं च निःश्वस्य किंचिद्दीनदृष्टिः सचकितप्रसारिताभ्यां भुजाभ्यामेनामनतिपीडं परिष्वज्य नातिविशदमचुम्बिषम् । अश्रुमुखी तु सा यदि प्रयासि नाथ प्रयातमेव मे जीवितं गणय । नय मामपि न चेद्दासजनो निष्प्रयोजन इत्यञ्जलिमवतंसतामनैषीत् । अवादिषं च ताम् । अयि मुग्धे कः सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति । यदि मदनुग्रहनिश्चलस्तवाभि-

1. कदर्थिता Pa[d]., which gives the preceding and following nouns in the nominative instead of in the accusative.— 2. अपाङ्गवीक्षितैः C., S., W., Ar.— अपाङ्गवृष्टिभिः G.; we accdg to Pa[d].— 4. अतिमञ्जुलम° W. against all Mss. & Com.— 6. संस्तरद° Ah[d].— 8. मकरकेतु S., C., W., इव इव C., S., Ar.—एव अस्य W.— 11. चानङ्ग° om. W.—अनङ्ग° om. C., S.; °पेशलवि° Pa[d]—अवसितार्थां—अनुभवन्तौ om. W.— 16. तदा तदा वियोगकाले समापाते अहं W.; अतिगूढ° Pa[d].— 17. °दृष्टिरहं पुरः° W.; भुजलताभ्यां निवर्ड G.

संघिराचराविचारं मदुपदिष्टम् । आदर्शय राज्ञे रहसि मत्सादृश्यगर्भं चित्रपटमाचक्ष्व च किमियमाकृतिः पुरुषसौन्दर्यसंवं पारमारूढा न वेति । बाढमारूढेति नूनमसौ वक्ष्यति । ब्रूहि भूयो यद्येवमस्ति कापि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या मम च मातृभूता । तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता । सोस्ति तादृशो मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते सप्तार्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः शतमगरुसमिधः कर्पूरमुष्टीः पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ चालयिष्यसि घण्टाम् । घण्टापुटक्वणिताहूतश्च भर्ता भवत्यै सर्वं रहस्यजातमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेदियमाकृतिरमुमुपसंक्रामेत् । त्वं तु भविष्यसि यथा पुराकारैव । यदि भवत्यै भवत्प्रियाय चैवं रोचते न चास्मिन्विधौ विसंवादः कार्य इति । वपुश्चेदिदं तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संप्रधार्य तेषामप्यनुमते कर्मण्यस्मिन्नभिमुखेन स्थेयमिति । स नियतमभ्युपेष्यति । पुनरस्यामेव प्रमदवनवीथीशृङ्गाटिकायामाथर्वणिकेन विधिना संज्ञापितपशुनाभिहुत्य मुक्ते हिरण्यरेतसि तद्धूमशमनेन संप्रविष्टेन मयास्मिन्नेव लतामण्डपे स्थातव्यम् । त्वं पुनः प्रगाढायां प्रदोषवेलायामालपिष्यसि कर्णे कृतनर्मस्मिता विकटवर्माणम् । धूर्तोसि त्वमकृतज्ञश्च । मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयमिति । श्रुत्वेदं त्वद्वचः स यद्वक्ष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि । ततः परमहमेव ज्ञास्यामि । मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जयेति । सा तथेति शास्त्रो-

---

1. रहसि om. C., W., S—3. परमारूढ C., W.; न वा W.—5. तादृग्मन्त्रो S., C., W., Ar.—11. एवं om. W.—12. विसंवादः शङ्क्य इति S., C., W., Ar.—13. संमन्त्र्य तेषां W., C., S., Ar.; we accdg. to Pad., G., Ahd., Bhū., अनुमतेन W.; अस्मिन् om. C., W.—15. °वनवाटीशृङ्गाटि° W., C.—16. धूमपटलेन सह Ar.—20. यद्वदिष्यति. C., W.

पदेशमिव मदुक्तमादृत्यातृप्तसुरतरागैव कथंकथमप्यगादन्तःपुरम् । अहमपि यथाप्रवेशं निर्गत्य स्वमेवावासमयासिषम् ।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत् । अतिष्ठच्च तन्मते स दुर्मतिः । अभ्रमच्च पौरजानपदेष्वियमद्भुतायमाना वार्ता । राजा किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुरासादयिष्यति । नूनमेष न विप्रलम्भोऽतिकल्याणः । कैव कथा प्रमादस्य । स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव संपाद्यः किलायमर्थः । तथा हि बृहस्पतिप्रतिमबुद्धिभिर्मन्त्रिभिरप्यभ्यूह्यानुमतः । यद्येवं भावि नान्यदतः परमस्ति किंचिदद्भुतम् । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति प्रसृतेषु लोकप्रवादेषु प्राप्ते पर्वदिवसे प्रगाढायां प्रौढतमसि प्रदोषवेलायामन्तःपुरोद्यानादुदैरत धूर्जटिकण्ठधूम्रो धूमोद्गमः । क्षीराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनां च परिमलः पवनानुसारी दिशि दिशि प्रावात्सीत् । प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविशम् । निशान्तोद्यानमागमच्च गजगामिनी । आलिङ्ग्य च मां सस्मितमभ्यधत्त । धूर्त सिद्धं ते समीहितमवसितश्च पशुरसौ । अमुष्य चोपप्रलोभनाय त्वदादिष्टया दिशा मयोक्तम् । कितव न साधयामि ते सौन्दर्यम् । एवं सुन्दरो हि त्वमप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणाम् । मधुकर इव निसर्गचपलो यत्र क्वचिदासज्जति भवादृशो नृशंस इति । तेन तु मे पादयोर्निपत्याभिहितम् । रम्भोरु सहस्व मत्कृतानि दुश्चरितानि । मनसापि न चिन्तयेयमितः परमितरनारीम् । त्वरस्व प्रस्तुते कर्मणीति । तदहमीदृशेन वैवाहिकेन नेपथ्येन त्वामभिसृतवती । प्रागपि रागाग्निसाक्षिकमनङ्गेन गुरुणा दत्तैव तुभ्यमेषा जाया । पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयने

1. अतृप्तसुरतरागैव om. W.— 6. एष विप्रलम्भोनाति° W., C.—8. प्यभूदनुमत W.—°प्यनुमत. G , Ar.— 10. प्रसृततरेषु W., C., S., G., Ar., wo accdg. to Pad.—लोकवादेषु W., C., S., Ar.— 13. च दिशि C., W., Ar.— 15. अभ्यधात् W.— 18. निसर्गचपलात् W., C., Ar.— 20. दुश्चरित्राणि S., Ar.— 21. °नारी C.—प्रकृते S., C., W., Ar.

दत्तेति । प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णिरितरेतरव्यतिषक्तकोमलाङ्गुलिदलेन भुजलताद्वयेन कन्धरां ममावेष्ट्य सलीलमाननमानमय्य स्वयमुन्नमितमुखकमला विभ्रान्तविशालदृष्टिरसकृदस्यचुम्बत् ।

अथैनामिहैव कुरण्टगुल्मगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यगिति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखावलम्बिनीं घण्टामचालयम् । अकूजच्च सा तं जनं कृतान्तदूतीवाह्वयन्ती । प्रावर्तिषि चाहमगरुचन्दनप्रमुखानि होतुम् । आयासीच्च राजा यथोक्तं देशम् । शङ्कापन्नमिव किंचित्सविस्मयं निचाय्य तिष्ठन्तमब्रवम् । ब्रूहि सत्यं भूयोपि मे भगवन्तं चित्रभानुमेव साक्षीकृत्य न चेदनेन रूपेण मत्सपत्नीरभिरमयिष्यसि ततस्त्वयीदं रूपं संक्रामयेयमिति । स तदैव देव्यैवेयं नोपधिरिति स्फुटोपजातसंप्रत्ययः प्रावर्तत शपथाय । स्मित्वा पुनर्मयोक्तम् । किं वा शपथेन । कैव हि मानुषी मां परिभविष्यति । यद्यप्सरोभिः संगच्छसे संगच्छस्व कामम् । कथय कानि ते रहस्यानि । तत्कथनान्ते त्वत्स्वरूपभ्रंश इति । सोऽब्रवीत् । अस्ति वृद्धो मत्पितुः कनिष्ठः प्रहारवर्मा । तं विषान्नेन व्यापाद्याजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम् । अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्राभियोगाय दित्सितम् । पौरवृद्धश्च पाञ्चालिकः परित्रातश्च सार्थवाहः खनतिनाम्नो यवनाद्वज्रमेकं वसुंधरामूल्यं लघीयसार्घेण लभ्यमिति ममैकान्तेमन्त्रयेताम् । गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्राममण्यमनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुद्धारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपागमत् । इत्यमिदमाचिरप्रसृतं रहस्यमित्याकर्ण्य

1. प्रपदेन च W.—प्रोत्क्षित° W.—2. अङ्गुलितलेन all except C.—व्यतिषिक्त° G., pa[d].—2. समावेष्ट्य S., C., A[r].—4. कुरुण्ट° S., C.—7. अगुरु° C., S., W., G.—8. विचार्य C., W., S., A[r].; we accdg. to G.; विलोक्य Ah[d].—10. रमयिष्यसि W.—त्वामिदं A[r]., S. त्वामि° W.—15. कनीयान्भ्राता &., C., W.— 18. असमीतिनाम्नो M.—22. °प्रसूत C., प्रस्तुतं G., S., A[r]., W.; we accdg. to Pa[d].

तामियन्तवायुरुपपद्यस्व कर्मोचितां गतिमिति च्छुरिकया द्विधाकृत्य कृत्तगात्रं तस्मिन्नेव प्रवृत्तस्फीतसर्पिषि हिरण्यरेतस्यजुहवम् अभूच्चासौ भस्मसात् । अथ स्त्रीस्वभावादीपद्विह्वलां हृदयवल्लभां समाश्वास्य हस्तकिसलयेवलम्ब्य गत्वा तद्गृहमनुज्ञयास्याः सर्वाण्यन्तःपुराण्याहूय सद्य एव सेवां दत्तवान् । विस्मितविलासिनीसार्थमध्ये काञ्चिद्विहृत्य कालं विसृष्टावरोधमण्डलस्तामेव संहतोरुमूलपपीडं भुजोपपीडं चोपगूह्य तल्पेभिरमयन्नल्पामिवामुं निशामनैषम् । अलभे च तन्मुखाद्राजकुलस्य शीलम् । उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः सह समगच्छे तांश्चाब्रवम् । आर्या रूपेणैव सह परिवृत्तो मम स्वभावः । य एष विषान्नेन हन्तुं चिन्तितः पिता मे स मुक्त्वा स्वमेतद्राज्यं भूय एव ग्राहयितव्यः । पितृवदमुष्मिन्वयं शुश्रूषयैव वर्तामहे । न ह्यस्ति पितृवधात्परं पातकमिति । भ्रातरं च विशालवर्माणमाहूयोक्तवान् । वत्स न सुभिक्षाः सांप्रतं पुण्ड्रास्ते दुःखमोहोपहतास्त्यक्तात्मानो राष्ट्रं नः सुभिक्षमभिद्रवेयुः । अतो मुष्टिवधः सस्यवधो वा यदोत्पद्यते तदाभियास्यसि । नाद्य यात्रा युक्तेति । नगरवृद्धावप्यलापिषम् । अल्पीयसा मूल्येन महार्हं वस्त्रं मास्तु मे लभ्यं धर्मरक्षायै तदनुगुणेनैव मूल्येनादानं क्रियतामिति । शतहलिं च राष्ट्रमुख्यमाहूयाख्यातवान् । योसावनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः सोपि पितरि मे प्रकृतिस्थे किमिति नाश्येत त्वयापि तस्मिन्संरम्भो न कार्य इति । त इमे सर्वमाभिज्ञानिकमुपलभ्य स एवायमिति निश्चिन्वाना विस्मयमानाश्च मां महादेवीं च प्रशंसन्तो मन्त्रबलानि चोद्घोषयन्तो वन्ध-

1. स्वकर्मा C., S., W.—छुरिकया G., S., Ar.— 2. प्रवृत्त° om. Ar.; प्रवर्तित° G.— 4. °किशलयम° W.—6. °मण्डलस्तदन्तःपुरे तया सह निशाम° W. °मण्डलस्तामेव संहतोरुमूलपपीडं चोपगूह्य....दवैनां G.; तामेव संहतो—मूलपपीडं भुजोपपीडं चोपगूह्य S.; तामेव संहतोरुमूरुपीडंमुरःपीडं चोपगूह्य....तां निशां C.; संहतोरुमूरुपीडं चोपगूह्य Ar.—ऊरुपपीडं Bh0.; वरुरूपपीडं. pa[d].— 10. स्वधर्मेन तद्राज्यं Ar.—14. मुष्टिबन्धः S., G., Ah[d].; सस्यबन्धः S., G.—16. वस्तु न मे लभ्यं W., वस्त्रवस्तु न लभ्यं S.; वस्त्रवस्तु लभ्यं नाम G.; महार्हमस्तु मे लभ्यं Ar.; according to conjecture; आदानं क्रियतां Ar.; W.—19. तत्त्वया G., C.

नात्पितरौ निष्क्रमय्य स्वं राज्यं प्रत्यपादयम् । अहं च तया मे धात्र्या सर्वमिदं मम चेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे । अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया । प्रसाधितात्मा देवपादविरहदुःखदुर्भगान्निर्विशन्भूयोस्य पितृसखस्य सिंहवर्मणो लेख्याच्चण्डवर्मणश्चम्पाभियोगमवगम्य शत्रुवधो मित्ररक्षा चोभयमपि करणीयमेवेत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम् । अभूवं च भूमिस्त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेरिति ।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत् । पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्मावप्यरीरधत् । किं हि बुद्धिमद्भिः प्रयुक्तं नाभ्युपैति शोभामिति । अर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिमाचष्टां भवानात्मीयचरितमित्यादिदेश । सोपि बद्धाञ्जलिरभिदधे ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उपहारवर्मचरितं नाम तृतीय उच्छ्वासः ॥

---

2. समाचेष्टितं W., G.; मम चेष्टितं Ar.—5. आभिगम्य W.—11. विधाय W.; °भत्प्रयुक्तं Pad.—Ar. places the last sentence in the next Uchchhvāsa.

## ॥ अथ चतुर्थ उच्छ्वासः ॥



देव सोहमप्येभिरेव सुहृद्भिरेककर्मोर्भिमालिनेमिभूमिवलयं भ्रमन्नुपासरं कदाचित्काशीपुरीं वाराणसीम् । उपस्पृश्य च मणिभङ्गनिर्मलाम्भसि मणिकर्णिकायामविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं परिभ्रमन्पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यां बध्यमानपरिकरमविरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयं च । कर्कशोयं पुरुषः । कार्पण्यमिव वर्षति म्लानतारं चक्षुः । आरम्भश्च साहसानुवादी । नूनमसौ प्राणनिस्पृहः किमपि कृच्छ्रं प्रियजनव्यसनमूलं प्रपित्सते । तत्पृच्छेयमेनमस्ति चेन्ममापि कोपि साहाय्यावकाशस्तमेनमभ्युपपद्य इत्यपृच्छम् । भद्र संनाहोयं साहसमवगमयति । न चेद्गोप्यमिच्छामि श्रोतुं शोकहेतुमिति । स मां सबहुमानं निर्वर्ण्य को दोषः श्रूयतामिति क्वचित्करवीरतले मया सह निषण्णः कथानकार्षीत् ।

महाभाग सोहमस्मि पूर्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः । प्रयत्नसंवर्धितोपि पित्रा दैवच्छन्दानुवर्ती चौर्यवृत्तिरासम् । अथास्यां काशीपुर्यामर्यवर्यस्य कस्यचिद्गृहे चोरयित्वा रूपाभिग्राहितोबध्ये । बद्धे च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजद्वारगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्न उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डमभ्यधावत् । अभिपत्य च मया निर्भयेन निर्भर्त्सितः परिणमन्दारुखण्डसुषिरानु-

1. सोप्यहम् A. B.—परिभ्रमन् W.—2. A omits काशीपुरीं.—W. omits च.—3. मनम्य W.—4. °षं पी° W. (a mistake).—5. आबध्यमान° W.—10. बहुमानं W.—11. श्रूयतामिति । ततः क्वचित् W.—14. संवर्धित (sic) पिता A. B. omits पित्रा. C omits अपि.—चौर° W.—15. C omits कस्यचित्.—स्व. W.—16. °विहारं A.—18. °काण्ड . W.—19. परिणत· A.

प्रविष्टोभयभुजदण्डचण्डघट्टितप्रतिमानो भीत इव न्यवर्तिष्ट । भूयश्च नेत्रा जातसंरम्भेण निकामदारुणैर्वागङ्कुशपादैरभिमुखीकृतो मयापि द्विगुणाबद्धमन्युना निर्भर्त्स्याभिहतो विवृत्यापाद्रवत् । अथ मयानुपत्य सरभसमाक्रुष्टो रुष्टः स यन्ता हन्त मृतोसि क्व यासि कुञ्जरापसदेति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन्निर्याणभागे कथमपि मदभिमुखमकरोत् । अपसरतु द्विरदकीट एषः । अन्यः कश्चिन्मातङ्गपतिरानीयतां येनाहं मुहूर्तं विहृत्य गच्छामि गन्तव्यां गतिमित्यवोचम् । दृष्ट्वैव स मां रुष्टमुद्गर्जन्तमुत्क्रान्तयन्तृनिष्ठुराज्ञः पलायिष्ट । मन्त्रिणा पुनरहमाहूयाभ्यधायिषि । भद्र मृत्युरिवैष मृत्युविजयो हिंसाविहारी । सोयमपि नाम त्वयैवंभूतः कृतः । तद्विरम्य कर्मणोस्मान्मलीमसात्किमलमसि प्रपद्यास्मानार्यवृत्त्या वर्तितुमिति । यथाज्ञापितोस्मीति विज्ञापितोयं मया मित्रवन्मय्यवर्तिष्ट ।

मयैकदा रहसि जातविश्रम्भेण पृष्टः सोभाषत स्वचरितम् । आसीत्कुसुमपुरे राज्ञो रिपुंजयस्य मन्त्री धर्मपालो नाम विश्रुतधीः श्रुतर्षिः । अमुष्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु । तस्यास्मि द्वैमातुरः कनीयान्भ्राताहम् । वेशेषु विलसन्तं मां विनयरुचिरसाववारयत् । पुनरवार्यदुर्नयश्चाहमपसृत्य दिङ्मुखेषु भ्रमन्यदृच्छयास्यां वाराणस्यां प्रमदवने मदनदमनाराधनाय निर्गत्य सह सखीभिः कन्दुकेन परिक्रीडमानां काशीभर्तुश्चण्डसिंहस्य कन्यां कान्तिमतीं नामा-

---

1. A omits चण्ड.—आघट्टित C.—2. पादपातनैः C. पादपातै· W.—3. द्विगुणाविद्धमन्यूना A. द्विगुणमन्यूना C.—निपत्य A. C. omits the word.—4. रुष्टश्च यन्ता W.—6. द्विपकीट C. अथावोचं। अपसरतु &c. B. अथापसरतु द्विरदवराकः W.—8. °यन्त्री° A. उत्क्रामन्तं यन्तृ° W.—10. तावत् for नाम W. C. omits the word.—विरम C. W.—12. यथाज्ञापयसीति C. यथाज्ञापयाति तथेति W.—13. नृष्टश्च मयैकदा &c. C.—14. नाम वेदश्रुतावृषिः B. नाम श्रुत ऋषिः C.—15. W. omits आस्मि.—16. असौ विनयरुचिः W.—17. पुनरवार्या (*sic*) A. अवार्य· (omitting पुनर्) W.—उपसृत्य W.—18. A. omits दमन.—19. अनुक्रीडमाना W.—कन्या कान्तिमती नामचक्रमे W.

चकमे । कथमपि समगच्छे च । अथ इत्नं विहरता कुमारीपुरे सा मयासीदापन्नसत्त्वा । कंचित्सुतं च सूतवती । सूतजात इति सोपविद्धो रहस्यानिर्भेदभयात्परिजनेन क्रीडाशैले, शबर्या श्मशानाभ्याशं नीतः । तयैव च निवर्तमानया निशीथे राजवीथ्यामारक्षिकपुरुषैरभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नप्रायं रहस्यम् । राजाज्ञयाहमाक्रीडनगिरिदरीगृहे विश्रब्धप्रसुप्तस्तयोपदर्शितः । यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गोद्यतेन कृपाणेन प्राजिहीर्ष्ये । नियतिबलाल्लूनबन्धनस्तमसिमाच्छिद्यान्त्यजं तमन्यांश्च कांश्चित्प्रहृत्यापासरम् । अशरणश्च भ्रमन्नटव्यामेकदोदश्रुमुख्या दिव्याकारया कन्यया सपरिवारयोपास्थायिषि । सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणिपत्य मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा कासि वासु कुतोस्यागता कस्य हेतोरस्य मे प्रसीदसीति साभिलापमाभाषिता मया बाष्पं मधुवर्षमवर्षत् ।

नाथ नाथस्य यक्षाणां मणिभद्रस्यास्मि दुहिता तारावली नाम । साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यापावर्तमाना मलयगिरेः, परेतावासे वाराणस्यां कमपि दारकं रुदन्तमद्राक्षम् । आदाय चैनं तीव्रस्नेहा मम पित्रोः संनिधिमनैषम् । अनैषीच्च तातो मे मां देवस्यालकेश्वरस्यास्थानीम् । अथाहमाहूयाजग्मा हरसखेन । बाले बालेऽस्मिन्भावस्ते कीदृश इति । औरस इवास्मिन्वत्से वत्सलतेति मया विज्ञापितः सत्यमाह वराकीति तन्मूलामतिमहतीं कथामकरोत् । तत्रैतन्मयावगतम् । त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः ।

1. चकमे B. C.—A. omits च.—अथ इत्नं च A. B. W.—3. °किद्ध्ताच्छ्मशानमानीतः W.—4. W. omits. च.— 8. °बन्धः. W.—9. एकदाश्रुमुख्यकयापि दिव्याकारया सपरिवारया कन्ययोपास्थायिषि W.— 11. वनस्य W.—महावट W. A. omits वन.— 12. B. W. omit तले.— 15. आर्य नाथस्य B. W.— 17. वाराणस्यां W.— 18. तीव्रस्नेहात् W.—W. omits मां C. omits मे.— 20. कीदृशस्ते भाव इति W.— 22. तत्रैतावदवगतं मया W.

बन्धुमती विनयवती कान्तिमती चाभिन्ना । वेदवत्यर्यदासी सोमदेवी चैकैव । हंसावली शूरसेना सुलोचना चानन्या । नन्दिनी रङ्गपताकेन्द्रसेना चापृथग्भूता । या किल शौनकावस्थायामग्निसाक्षिकमात्मसात्कृता गोपकन्या सैव किलार्यदासी पुनश्चाद्य तारावलीत्यभूवम् । बालश्च किल शूद्रकावस्थे त्वय्यार्यदास्यवस्थायां मय्युदभूत् । अवर्ध्यत च विनयवत्या । स्नेहवासनया तु तस्यां कान्तिमत्यवस्थायामद्योदभूत् । एवमनेकमृत्युमुखपरिभ्रष्टं दैवान्मयोपलब्धः । तमेकपिङ्गादेशाद्वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्तिनो राजवाहनस्य परिचर्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता कृतान्तयोगात्कृतान्तमुखभ्रष्टस्य ते पादपद्मशुश्रूषार्थमागतास्मीति ।

तच्छ्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य हर्षाश्रुमुखो मुहुर्मुहुः सान्त्वयित्वा तत्प्रभावदर्शिते महति मन्दिरेऽहर्निशमिन्द्रदुर्लभान्भोगाननन्वभूवम् । द्वित्राणि दिनान्यतीत्य मत्तकाशिनीं तामवादिषम् । प्रिये प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामीति । तया सस्मितमेहि कान्त कान्तिमतीदर्शनाय नयामि त्वामिति स्थितेर्धरात्रे राज्ञो वासगृहमनीये । ततस्तस्य चण्डसिंहस्य शिरोभागवर्तिनीमसियष्टिमादाय प्रबोध्यैनं प्रस्फुरन्तमब्रवम् । अयमस्मि भवज्जामाता । भवदनुमत्या विना तव कन्याभिमर्शी । तमपराधमनुवृत्त्या प्रमार्ष्टुमागत इति । सोथ भीतो मामभिप्रणम्याह । अहमेव मूढोपराद्धो यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा

1. देववती यज्ञदासी A. वेगवती अर्यदासी C. वेदिमती यक्षदासी W.— 2. A. B. C. omit च.—गोपकन्या for सुलोचना C. W.— चाद्वितीया W. C.—3. चाग्निसाक्षिकं A.— 4. बालकश्च A.— 5. अभूत् A.—अवर्द्धत W.—स तु W.— 7. अनेकमृत्युहस्तमुक्तो दैवान्मयोपलब्धः A. एवमेनं मृत्युमुख° &c. C.— 10. परिभ्रष्टस्य C. W.— 11. इति श्रुत्वा W.—12. भूमिदुर्लभान् C. W.— 13. अतिक्रम्य C. W.— 14. प्रत्युपकृत्य W.— 15. सास्मितमभिहितं C. W.— 16. ततस्तच्छिरः° C. W.— 17. आदायासियष्टिं C. W.—अहमस्मि C. W.— 19. सोतिभीतः C. W.— 20. मूढापराद्धः W.-

स्वयमेव समादिष्टवानहम् । तदास्तां कान्तिमती राज्यमिदं मम जीवितमप्यद्यप्रभृति भवदधीनमित्यवादीत् । अथापरेद्युः प्रकृतिमण्डलं संनिधाप्य विधिवदात्मजायाः पाणिमग्राहयत् । अश्रावयच्च तनयवार्तां तारावली कान्तिमत्यै । सोमदेवीसुलोचनेन्द्रसेनाभ्यश्च पूर्वजातिवृत्तान्तम् । इत्यहमद्य मन्त्रिपदापदेशं यौवराज्यमनुभवन्विहरामि विलासिनीभिरिति ।

स एवं मादृशेऽपि जन्तौ परिचर्यानुबन्धी बन्धुरेकः सर्वभूतानामसकेन स्वर्गते श्वशुरे ज्यायसि श्याले चण्डघोषनाम्नि स्त्रीष्वतिप्रसङ्गात्प्रागेव क्षयक्षीणायुषि पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारमभ्यषेचयत् । अवर्धयच्च विधिनैनं स साधुः । तस्माच्च यौवनोन्मादिनः पैशुन्यवादिनो दुर्मन्त्रिणः कतिचिदासन्नन्तरङ्गभूताः । तैः किलासावित्थमग्राह्यत । प्रतन्यैव स्वसा तेऽमुना भुजंगेन संगृहीता । पुनः प्रसुते राजनि भर्तुरनुयतासिरासीत् । तेनास्मै तत्क्षणप्रबुद्धेन भीत्यानुनीय दत्ता कन्या । तं च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयमसमर्थ इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः । क्षिणोति पुरा स कृतघ्नो भवन्तम् । तमेवान्तकपुरमभिगमयितुं यतस्वेति । स तथा कुपितोऽपि यक्षिणीभयान्नास्मिन्पापमाचरितुमशकत् । एषु किल दिवसेष्वयथापूर्वमाकृतौ कान्तिमत्याः समुपलक्ष्य राजमहिषी सुलक्षणा नाम समप्रणयमपृच्छत् । देवि नाहमयथातथ्येन विप्रलम्भनीया । कथय तथ्यं केनेदमयथापूर्व्यमाननारविन्दे तवैषु वासरेष्विति । सा तु भद्रे स्मरसि किमयथातथ्येन किंचिन्मयोक्तपूर्वम् । सखी मे तारावली सपत्नी च किमपि कलुषिताशया रहति भर्त्रा

1. C. omits स्वयमेव.—मम च ( omitting अद्य ) C. W.—2. तदधीनं C. W.—4. C. omits जाति.—5. °पदापदेशात् C.— 8. ज्यायसि च C. W.— 9. पञ्चवर्षं A. B.—12. तदासुन्दर C. W.— 13. तेनैव दैव.नन्दन° C. तेनैवास्मै देवनन्दन° W.— 14. दत्ता A. B. कन्या दत्ता W.— 15. क्षिणोति च C. B. has a gap here extending to अभिगृह्य पूर्वनन्दनम् p. 85. —17. °अनतिचिर C. नचिरमेव W.— नचिरात् M.— 18. नष्टनन्द्य A. नष्टनष्ट (sic) C.—19. अयथातथ्येन W.—20. अयथापूर्वं W.— 21. सा त्ववदीत् W. अयथातथ्येन A.—अवदीत् M.

मद्गोत्रापदिष्टा प्रणयमभ्युपेत्य प्रणम्यमानाप्यस्माभिरुपोढमत्सरा प्रावसत् । अवसीदति च नः पतिः । अतो मे दौर्मनस्यमिति । तत्प्रायेणैकान्ते सुलक्षणया कान्ताय कथितम् । अथासौ निर्भयोच्च प्रियतमाविरहपाण्डुभिरवयवैर्धैर्यस्तम्भिताश्रुपर्याकुलेन चक्षुषोष्मश्वासशोषिताभिरिव नातिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तं कथमपि राजकुले कार्याणि कारयन्तं पूर्वसंकेतितैः पुरुषैरभिग्राह्याबन्धयत् । तस्य किल स्थानस्थानेषु दोषानुद्घोष्य तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेदिति । अतोऽत्रैकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान्मोक्तुकामो बध्नामि परिकरमिति ।

मयापि मत्पितृव्यसनमाकर्ण्य पर्यश्रुणा सोऽभिहितः । सौम्य किं तत्र गोपयित्वा । यस्तस्य सुतो यक्षकन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्तन्यासः कृतः सोऽहमस्मि । शक्ष्यामि सहस्रमपि भटानामुदायुधानां हत्वा पितरं मोचयितुम् । अपि तु संकुले यदि कश्चित्पातयेत्तदङ्गे शस्त्रिकां सर्व एव मे यत्नो भस्मनि हुतमिव भवेत् । इत्यनवसितवचन एव मयि महानाशीविषः प्राकाररन्ध्रेणोदैरयच्छिरः । तमहं मन्त्रौषधिबलेनाभिगृह्य पूर्णभद्रमत्रवम् । भद्र सिद्धं नः समीहितम् । अनेन तातमलक्ष्यमाणः संकुले यदृच्छया पतितेन नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत । त्वया मुक्तसाध्वसेन माता मे बोधयितव्या । यः स यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सुनुः सोऽनुप्राप्तः । पितुरवस्थां मदुपलभ्य बुद्धिबलादित्थमाचरिष्यति । त्वया तु मुक्तसाध्वसया राज्ञे प्रेषणीयम् । एष खलु क्षत्रधर्मो यद्बन्धुरबन्धुर्वा दुष्टः स निरपेक्षं निग्राह्य इति । स्त्रीधर्मश्चैष यद्दुष्टस्यादुष्टस्य वा भर्तु-

2. अतोऽस्या मे A. अतोऽस्ति मे W.—7. स्थानेषु C.—दोषं C. W.—10. तत्पितृ° W.—11. गोपायित्वा W.— 18. पातितेन W.— 19. इत्युच्येत A. उदास्येच B.— त्वया तु B. W.—19. इत्युत्सृज्येत M.—21. मुक्तत्रासया W. मुक्तत्रासयोक्त्वा C.—23. A omits वा. अदुष्टस्य दुष्टस्य C. W.

र्गतिर्गन्तव्येति । तदहममुनैव सह चिताग्निमारोक्ष्यामि । अभिजनानुरूपः पश्चिमो विधिरनुज्ञातव्य इति । स एवं निवेदितो नियतमनुज्ञास्यति । ततः स्वमेवागारमानीय काण्डपटपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरमधिशाय्य स्वयं कृतानुमरणमण्डनया च तत्र संनिधेयमिति । अहं च बाह्यकक्ष्यागतस्त्वया प्रवेशयिष्ये । ततः पितरमुज्जीव्य तदभिरुचितेनाभ्युपायेन चेष्टिष्यामह इति । स तथेति हृष्टतरस्तूर्णमभ्यगमत् ।

अहं तु घोषणास्थाने चिञ्चावृक्षं लम्बघनतरविपुलशाखमारुह्य गूढतनुरतिष्ठम् । आरूढश्च लोको यथायथमुच्चस्थानानि । उच्चावचप्रलापः प्रस्थितः । तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनिमहाजनानुयातमानीय मदभ्याश एव स्थापयित्वा मातङ्गैरघोषयत् । एष मन्त्री कामपालो राज्यलोभाद्भर्तारं चण्डसिंहं युवराजं चण्डघोषं विषेणोपांशु हत्वा पुनर्देवोऽपि सिंहघोषः पूर्णयौवन इत्यस्मिन्नपि पापमाचरिष्यन्विश्वासाद्रहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य तैः स्वामिभक्त्या विवृतगुह्यो राज्यकामुकस्य ब्राह्मणस्यान्धतमसप्रवेशो न्याय्य इति प्राड्विवाकवाक्यादक्ष्युद्धरणाय नीयते । पुनरन्योऽपि यः स्यादन्यायवृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देव इति । श्रुत्वैतद्बद्धकलकले महाजने पितुरङ्गे प्रदीप्तशिखमाशीविषं न्यक्षिपम् । अहं तु भीतो नामावप्लुत्य तत्रैव जनानुलीनः क्रुद्धव्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणादस्तम्भयम् । अपतच्च स भूमौ मृतकल्पः । आलपं च सत्यमिदं राजावमानिनं दैवो दण्ड एव स्पृशति । यदयमक्षिभ्यामवनिपेन विनाचिकीर्षितः प्राणैरेव वियोजितो विधिनेति । मदुक्तं च कैश्चिदन्वम

1. [illegible] C.—4. °[illegible] त्वया तत्र च W. °[illegible] त्वया च तत्र C.—6. [illegible] C. W.—8. C. W. omit [illegible].—16. अन्ध [illegible] C. W.—17. [illegible] W.—19. अहं च C. W.—21. [illegible] B. A. omits स. It is supplied in the margin.—22. [illegible] B. W.—[illegible] (C. [illegible]) [illegible] C. W.

न्यन्त । अपरे पुनर्निनिन्दुः । दर्वीकरस्तु तमपि चण्डालं दष्ट्वारूढत्रासद्रुतलोकदत्तमार्गः प्राद्रवत् ।

अथ मदम्बा पूर्णभद्रप्रबोधितार्था तादृशेऽपि व्यसने नातिविह्वलाल्पपरिजनानुयाता पद्भ्यामेव सधीरमागत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेनोपधारयन्ती स्थिता राज्ञे समादिशत् । एष मे पतिस्तवापकर्ता न वेति देवो जानाति । न मेनयास्ति चिन्तया फलम् । अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम् । अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय मामिति । श्रुत्वा चैतत्प्रीतियुक्तः प्रतिसमादिक्षत्क्षितीशः । क्रियतां कुलोचितः संस्कारः । उत्सवोत्तरं च पश्चिमं विधिसंस्कारमनुभवतु मे भगिनीपतिरिति । चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते कामपालोऽपि कालदष्ट एवेति स्वभवनोपनयनमप्यमुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त । नीतश्च पिता मे विविक्तायां भूमौ दर्भसंस्तरमधिशयानः स्थितोऽभूत् । अथ मदम्बा मरणमण्डनमनुष्ठाय सकरुणं सखीरामन्त्र्य मुहुरभिप्रणम्य भवनदेवतां यत्नेन निवार्य परिजनाक्रन्दितानि पितुर्मे शयनस्थानमेकाकिनी प्राविशत् । तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन मया वैनतेयतां गतेन निर्विषीकृतं भर्तारमैक्षत । हृष्टतमा च पत्युः पादयोः पर्यश्रुमुखी निपत्य मां च प्रस्नुतस्तनी मुहुर्मुहुः परिष्वज्य सहर्षबाष्पगद्गदमगदत् । पुत्र योऽसि जातमात्रः पापया मया परित्यक्तः स किमर्थमेवं मां निर्घृणामनुगृह्णासि । अथवैष ते निरपराध एव जनयिता । युक्तमस्य प्रत्यानयनमन्तकाननात् । क्रूरा खलु तारावली या त्वामुपलभ्यापि तत्त्वतः कुबेरादसमर्प्य मह्यम-

4. कुलपरिजन° W. His MS. B. has our reading.—W. omits एव.—धारं W.—धारयन्ता W.—उत्सङ्ग धारयन्ती C.—6. देव एव B. दैवमेव W.—9. क्षितीश्वरः C. W.—13. आनीतश्च C. W.—15. भवनदेवताः C. W.—परिजनाक्रन्दित C. परिजनक्रान्दितं W.—16. प्राविक्षत् C. W.—W. omits च, reading मया in the next line.—17. वैनतेयतागतेन W. from his MS.A. His other MSS. have our reading.—18. प्रणिपत्य W.—20. A. C. omit मया.—अतिनिर्घृणां W.—अथैष A. C.

मात्मलावण्येन निर्धुनाना विग्रहिणीव देवी विश्वंभरा हरगृहिणीवासुरविजयायावतीर्णा पातालमागता गृहिणीव भगवतः कुसुमधन्वनो राज्यलक्ष्मीरिवानेकदुर्नृपदर्शनपरिहरणाय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः काचित्कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत । तथाभूते च तस्मिन्नङ्गनासमाजे कुसुमितेव काशयष्टिः पाण्डुशिरसिजा स्थविरा कापि पादयोर्निपत्य त्रासदीनमब्रूत । दीयतामभयमस्मा अनन्यशरणाय स्त्रीजनाय । किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः । आज्ञापय कोसि कस्य हेतोरागतोसीति । सा तु मया प्रत्यवादि । मा स्म भवत्यो बिभयुः । अयमहमस्मि द्विजातिवृषात्कामपालाद्देव्यां कान्तिमत्यामुत्पन्नोर्थपालो नाम । सत्यर्थे निजगृहान्नृपगृहं सुरङ्गयोपासरन्निहान्तरे वो दृष्टवान् । काः स्थ यूयम् । कथमिह निवसथेति । सोदञ्जलिरुदीरितवती । भट्टारक भाग्यवत्यो वयं यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयताम् । यस्तव मातामहश्चण्डसिंहस्तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगादन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरन्तिकमगात् । अथ चण्डसिंहो देवो मामाहूयोपह्वरे समाज्ञापयत् ऋद्धिमति कन्यकेयं कल्याणलक्षणा । तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवद्वर्धयित्वा दित्सामि । बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्यकानां प्रकाशावस्थापनात् । अत इयमरमतिव्यसनाय कारिते महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णनानामण्डप-

---

1. स्वलावण्येन C. W.—वसुन्धरा W.—हरि° A. हरेः B.— 2. °अवतीर्णस्य पातालभागं B.—4. W. omits काचित्— 6. काचिच्चरणयोर्मे C. W.—10. भैषुः C. W.—A. omits अयं.—°वृषभात् C. W.— 12. कथय काः C. कथयत कः C. W.—13. भट्टाकर (*sic*) A. भर्तृदारक C. W.— 19. अगमत C. W.—देवश्चण्डसिंहो W.— 21. C. W. omit विधिवत.

प्रेक्षागृहे प्रचुरपरिबर्हया भवत्या संवर्ध्यताम् । अस्त्यत्र भोग्यवस्तु वर्षशतोपभोगेनाप्यक्षय्यमिति । स तथोक्तो निजवासगृहस्य द्वयङ्गुलभित्तावर्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत् । इह च नो वसन्तीनां द्वादश समाः समत्ययुः । इयं च वत्सा तरुणीभूता । न चाद्यापि स्मरति राजा । काममियं पितामहेन संकल्पिता दर्पसाराय । त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता तवैव जायात्वेन स्वमात्रा समकल्प्यत तदत्र प्राप्तरूपं चिन्तयतु कुमार एवेति । तां पुनरवोचम् । अद्यैव राजगृहे किमपि कार्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्य इति । तेनैव दीपदर्शितेन बिलपथेन गत्वा स्थितेऽर्धरात्रे तदर्धपादमुद्धृत्य वासगृहं प्रविष्टो विश्रब्धप्रसुप्तं सिंहघोषं जीवग्राहमग्रहीषम् । आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रपथेन क्षणसंनिधिमनैषम् । आनीय च स्वभवनमायसनिगडसंदानितचरणयुगलमवनमितमलिनवदनमश्रुबहलरक्तचक्षुषमेकान्ते जनयित्रोर्ममादर्शयम् । अकथयं च विलकथाम् । अथ पितरौ नितरां हृष्टौ तं निकृष्टाशयं निशाम्य नियम्य बन्धने क्षिप्त्वा तस्या दारिकाया यथार्हेण कर्मणा पाणिं ममाग्राहयताम् । अनायकं च तद्राज्यमस्मदायत्तमेव जातम् । प्रकृतिकोपभयात्तु मम मात्रा मुमुक्षितोऽपि न मुक्त एव सिंहघोषः । तथा स्थिताश्च वयम् । अङ्गराजः सिंहवर्मा देवपादानां भक्तिमान्कृतकर्मा चैत्यमित्राभियुक्तमेनमभ्यसराम । अभूवं च भवत्पादपङ्कजरजोनुग्राह्यः । स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्वदुश्चरितक्षालनमनार्यः सिंहघोष इत्यर्थपालः प्राञ्जलिः प्रणनाम । देवोऽपि

2. वर्षशतेनाप्यक्षय्यं C.—उपभोग° W.—W. omits स.—तथो (*sic*) B. तथोक्त्वा C. W.—निजवासगृहस्याङ्गणभित्तावर्द्धपादं W.—6. दर्पसाराय संकल्पिता C. W.—8. A. B. omit राजगृहे.—10. प्रत्युद्धृत्य C. W.—11. °तुनं C.—12. अहमिव. W.—13. °संदित° A.—15. पितरौ प्रहृष्टतरौ C. W.—16. B. omits नियम्य. बन्धने नियम्य (omitting क्षिप्त्वा) C. W.—मां पाणिमग्राहयेताम् W. पाणिं माममग्राहयताम् B.—18. मन्मात्रा C. W.

राजवाहनो वहु पराक्रान्तं वहूपयुक्ता च वुद्धिर्मुक्तवन्धनस्ते श्वशुरः पश्यतु मामित्यभिधाय भूयः प्रमतिमेव पश्यन्प्रीतिस्मेरः प्रस्तूयतां तावदात्मीयं चरितमित्याज्ञापयत् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेर्थपालचरितं
नाम चतुर्थ उच्छ्वासः ।

## ॥ अथ पञ्चम उच्छ्वासः ॥

सोऽपि प्रणम्य विज्ञापयामास । देव देवस्यान्वेषणाय दिक्षु भ्रमन्नंकषस्य कस्यापि विन्ध्यपार्श्वरूढवनस्पतेरधः परिणतपतङ्गबालपल्लवावतंसिते पश्चिमदिगङ्गनामुखे पल्वलाम्भस्युपस्पृश्योपास्य संध्यां तमःसमीकृतेषु निम्नोन्नतेषु गन्तुमक्षमः क्ष्मातले किसलयैरुपरचय्य शय्यां शिशयिषमाणः शिरसि कुर्वन्नञ्जलिं यास्मिन्वनस्पतौ वसति देवता सैव मे शरणमस्तु शरारुचक्रचारभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायां महाटव्यामस्यामेकाकिनः प्रसुप्तस्येत्युपधाय वामभुजमशयिषि । ततः क्षणादवनितलदुर्लभेन स्पर्शेनासुखयिषत किमपि गात्राणि । आह्लादिषत चेन्द्रियाणि । अभ्यमनायिष्ट चान्तरात्मा । विशेषतश्च हृषितानि तनूरुहाणि । पर्यस्फुरन्मे दक्षिणभुजः । कथं न्विदमिति मन्दमन्दमुन्मिषन्नुपर्यच्छचन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि । वामतो वलितदृष्टिः समया सौधभित्तिचित्रास्तरणशायिनमतिविश्रब्धप्रसुप्तमङ्गनाजनमलक्षयम् । दक्षिणतो दत्तचक्षुरागलितस्तनांशुकाममृतफेनपटलपाण्डुरशयनशायिनीमादिवराहदंष्ट्रांशुजाललग्नांमसस्रस्तदुग्धसागरदुकूलोत्तरीयां भयसाध्वसमूर्छितामिव धरणीमरुणाधरमणिकिरणबालकिसलयलास्यहेतुभिराननारविन्दपरिमलोद्वाहैर्निश्वासमातरिश्वभिरीश्वरेक्षणदहनदग्धं स्फुलिङ्गावशेषमनङ्गमिव संधुक्षयन्तीमन्तःसुप्तषट्पदमम्बुजमिव जातनिद्रं सरसमामीलितलोचनेन्दीवरमाननं दधानामैरावतमदावलेपलूनापविद्धामिव नन्दनवनकल्पवृक्षरत्नवल्लरीं कामपि तरुणीमवालोकयम् । अतर्कयं च । क्व गता सा महाटवी । कुत इदमूर्ध्वाण्डकपालसंपुटोदरोल्लेखि

2. विन्ध्यपादस्त्रा पार्श्वे A. C. omits पाद. विन्ध्यपार्श्वारूढस्य वनस्पते· W.— 4. क्षमा C. W.— 5. यस्मिन् W.— 7. अस्यां महाटव्यां C. W. B. omits अस्यां.—मे प्रसुप्तस्य C. W.— 8. C. W. omit तल.— 10. हृषितास्तनूरुहाः C. W.— 14. °स्तनां C.— 16. किरणजाल C.— 17. उद्गाहिभिः C.—दग्ध° A.— 18. जातनिद्रां A. W. जातानिमीलितलोचनोत्पलं (*sic*) B.— 19. सरसी A.— 20. °मञ्जरीं C. W.—आलोकयं C. W.— 21. B. W. omit उदर.

शक्तिध्वजशिखरशूलोत्सेधं सौधमागतम् । क्व च तदरण्यस्थलीसमास्तीर्णं पर्णशयनम् । कुतस्त्यं चैतदिन्दुगभस्तिसंभारभासुरं हंसतूलदुकूलशयनम् । एष च को नु शीतरश्मिकिरणरजतरज्जुदोलापरिभ्रष्टमूर्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः । का चेयं देवीवारविन्दहस्ता शारदशशाङ्कमण्डलं पर्यङ्कतलमेतदमलदुकूलोत्तरच्छदमधिशेते । न तावदेषा देवयोषा । यतो मन्दमन्दमिन्दुकिरणैः संवाह्यमाना कमलिनीव निद्राति । भग्नवृन्तच्युतरसबिन्दुशबलितं पाकपाण्डुचूतफलमिवोद्भिन्नस्वेदलेखमालक्ष्यते गण्डस्थलम् । अभिनवयौवनविदाहनिर्भरोष्मणि कुचतटे वैवर्ण्यमुपैति वर्णकः । वाससी च परिभोगानुरूपं धूसरिमाणमादर्शयतः । तदेषा मानुष्येव दिष्ट्या चानुच्छिष्टयौवना । यतः सौकुमार्यगताः सन्तोपि संहता इवावयवाः । प्रस्निग्धतमापि पाण्डुतानुविद्धेव देहच्छविः । अदन्तपीडाभिज्ञतया नातिविशदरागोद्भेदो मुखे विद्रुमद्युतिरधरमणिः । अनत्यापूर्णमारक्तमूलचम्पककुड्मलदलकठोरं कपोलतलम् । अनङ्गबाणपातशङ्कामुक्ततया च विश्रब्धमधुरं सुप्यते । न चैतद्वक्षःस्थलं निर्दयविमर्दविस्तारितमुखस्तनयुगमुकुलम् । अस्ति च ममानतिक्रान्तशिष्टमर्यादचेतसोस्यामासक्तिः । आसक्त्यनुरूपं पुनराश्लिष्टा यदि स्पष्टमाक्रन्दितेनैव निद्रां मोक्ष्यति । अथाहं न शक्ष्यामि चानुपरिलष्य शयितुम् । अतो यद्भावि तद्भवतु । भाग्यमत्र परीक्षिष्य इति स्पृष्टास्पृष्टमेव किमप्याविद्धरागसाध्वसं लक्ष्यसुप्तः स्थितोस्मि । सापि किमप्युत्कम्पिता रोमोद्भेदवता वामपार्श्वेन सुखायमानेन मन्दमन्दजृम्भिकारम्भमन्थराङ्गी त्वङ्गदभ्रपक्ष्मणोश्चक्षुषोरलसतान्ततारकेणानातिपक्वनिद्रा-

2. पल्लव° W.—इदं W.— 3. °रश्मिराश्मि° C. W.— 4. एव A.— 5. मण्डलामलदुकूल° W. मण्डलं मल° (*sic*) B. C. our reading corrected into that of W.— 8. ° रेखं C. W.—गण्डस्थलमालक्ष्यते C. W.— 12. दन्तपीडानभिज्ञतया C. W.— 14. शङ्कामुक्तं B. °मुक्ताशङ्क C. W.— 17. C. omits यदि.—आर्तरवेणैव C. W.— 18. C. omits न.— 22. अतिपक्व° W.

कषायितापाङ्गपरभागेण युगलेनप्रत्युन्मिषन्ती बालविस्मयहर्षरागशङ्काविलासविभ्रमव्यवहितानि क्रीडान्तराणि कानि कान्यपि कामेनाद्भुतानुभावेनावस्थान्तराणि कार्यमाणा परिजनबोधनोद्यतां गिरं कालावेगपरवशां हृदयमङ्गानि च साध्वसायाससंबध्यमानस्वेदपुलकानि कथं कथमपि निगृह्य सस्पृहेण मधुरकूणितत्रिभागेण मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य दूरोत्सर्पितपूर्वकायापि तस्मिन्नेव शयने सचकितमशयिष्ट । अजनिष्ट च मे रागाविष्टचेतसोपि कथमपि निद्रा । पुनरननुकूलस्पर्शदुःखायमानगात्रः प्राबुध्ये । प्रबुद्धस्य च मे सैवाटवी तदेव तरुतलं स एव पत्रास्तरोभूत् । विभावरी च व्यभासीत् । अभूच्च मे मनसि । किमयं स्वप्नः किं विप्रलम्भः । किं वेयमासुरी दैवी वा कापि माया । यद्भावि तद्भवतु । नाहमिदं तत्त्वतोनवबुध्य मोक्ष्यामि भूमिशयनम् । यावदायुरत्रास्यै देवतायै प्रतिशयितोस्मीति निश्चितमतिरतिष्ठम् ।

अथाविर्भूय कापि रविकराभितप्तकुवलयदामताम्राङ्गयष्टिः क्लिष्टनिवसनोत्तरीया निरलक्तकरूक्षपादपल्लवेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं विरहानलमनवरतसलिलधाराविसर्जनाद्रुधिरशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती कुलचारित्रबन्धनपाशविभ्रमेणैकवेणीभूतेन केशकलापेन नीलांशुकचीरचूडिकापरिवृता पतिव्रतापताकेव संचरन्ती क्षामक्षामापि देवतानुभावादनतिक्षीणवर्णावकाशा सीमन्तिनी प्रणिपतन्तं मां हर्षोत्कम्पितेन भुजलताद्वयेनोत्थाप्य पुत्रवत्परिष्वज्य शिरस्युपाघ्राय वात्सल्यमिव स्तनमुखेन स्तन्यच्छलात्क्षरन्ती शिशिरेणास्रुणा निरुद्धकण्ठी स्नेह-

---

1. कषायदृगिन्दीवरापाङ्गपरभागेन A. कषायितं (sic) परभागेन B.—2. C. omits विभ्रम.—7. W. omits च.—9. सैव मे W. B. omits मे.—10. विप्रलम्भो वा W.—11. W. omits वा.—12. °रस्यै C. W.—13. प्रतिशयितोस्मीति C. W.—18. नीलांशुकचीरचूडिका°. C. नीलांशुकचीरचूडिका° W.—21. स्तनमुखेन C. स्तन्यमुखेन W.

गर्भं व्याहार्षीत् । वत्स यद्वः कथितवती मगधराजमहिषी वसुमती मम हस्ते बालमर्थपालं परिदाय कथां कांचिदात्मभर्तृपुत्रसखीजनानुविद्धां राजराजप्रवर्तितां कृत्वान्तर्धानमगादात्मजा मणिभद्रस्येति साहमस्मि वो जननी । पितुर्वो धर्मपालसूनोः सुमित्रानुजस्य कामपालस्य पादपद्ममूलान्निष्कारणकोपकलुषिता प्रोष्यानुशयविधुरा स्वप्ने केनापि रक्षोरूपेणोपेत्य शप्तास्मि । चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखायेति ब्रुवतैवाहमाविष्टा प्राबुध्ये । गतं च तद्वर्षं वर्षसहस्रदीर्घम् । अतीतायां तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सवसमाजमनुभूय बन्धुजनं च स्थानस्थानेभ्यः संपतितमभिसमीक्ष्य मुक्तशापा पत्युः पार्श्वमुपसरिष्यामीति प्रस्थितायामेव मयि त्वमभ्येत्य प्रपन्नोस्मि शरणमिहत्यां देवतामिति प्रसुप्तोसि । एवं शापदुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो भवान् । अपि तु शरणागतमटव्यामविरलप्रमादायामयुक्तं परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवासि नीतः । प्रत्यासन्ने च तस्मिन्देवगृहे पुनरचिन्तयम् । कथमिव तरुणेनानेन सह समाजं गमिष्यामीति । अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्धनस्य कन्यां नवमालिकां घर्मकालसुभगे कन्यापुरविमानहर्म्यतले विशालकोमलशय्यातलमधिशयानां यदृच्छयोपलभ्य दिष्टचेयं प्रसुप्ता परिजनश्च गाढनिद्रः शेतामयमत्र मुहूर्तमात्रं ब्राह्मणकुमारो यावत्कृतकृत्या निवर्तेयेति त्वाममुत्र शाययित्वा तमुद्देशमगमम् । दृष्ट्वोत्सवश्रियं निर्विश्य च स्वजनदर्शनसुखमभिवाद्य च त्रिभुवनेश्वरं महेश्वरमा-

1. द्वये B. यदि वः C. W.—2. निधाय C. W.—कथां च C. W. कथचि for कथां कांचित् B.—5. W. omits पद्म.—11. प्रतिपन्न. W.—12. एव A.—C. W. omit तु —तदा मया C.—13. A. omits तु.—अविरतप्रमादायामस्यां महाटव्यां C. W.—14. C. omits मया त्वमपि.—15. अथ कथमिव A. इह for इव C. W.—17. विशालकोमलं B. विशालकोमलतलं शय्यातलं C. W. In C the first तल is smeared over.—18. सुप्ता C. W.— गाढसुप्तः A.— 20. निवर्तेयम् A.—अत्र A. नत्र C. W.—दृष्ट्वा च C. W.— 21. W. omits महेश्वरं.

त्मालीकमल्याकलनोपारूढसाध्वसं च नमस्कृत्य भक्तिप्रगतहृदया भगवतीमम्बिकां तया गिरिदुहित्रा देव्या सस्मितमयि भद्रे मा भैषीर्भवेदानीं भर्तृपार्श्वगामिनी गतस्ते शाप इत्यनुगृहीता सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्य दृष्ट्वैव त्वां यथावदभ्यजानाम् । कथं मत्सुत एवायं वत्सस्यार्थपालस्य प्राणभूतः सखा प्रमतिरिति । पापया मयाज्ञानादस्मिन्नौदासीन्यमाचरितम् । अपि चायमस्यामासक्तभावः । कन्या चैनं कामयते युवानम् । उभौ चैनौ लक्ष्यसुप्तौ त्रपया साध्वसेन वान्योन्यस्यात्मानं न विवृण्वाते । गन्तव्यं च मया । कामाक्रान्तयाप्यनया कन्यया न गुह्यरक्षणाय समाभाषितः सर्वसखीजनः परिजनो वा । नयामि तावत्कुमारम् । पुनरिममर्थं लब्धलक्षो यथोपपन्नैरुपायैः साधयिष्यतीति मत्प्रभावस्वापितं भवन्तमेतदेव पत्रशयनं तदेव प्रत्यनैषम् । एवमिदं वृत्तम् । एषा चाहं पितुस्ते पादमूलमुपसर्पयमिति प्राञ्जलिं मां भूयो भूयः परिष्वज्य शिरस्युपाघ्राय कपोलयोश्चुम्बित्वा स्नेहविह्वला गतासीत् ।

अहं च पञ्चबाणवश्यः श्रावस्तीमभ्यवर्तिषि । मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत् । अहं च तत्र संनिहितः किंचिदस्मेषि । संनिधिनिषण्णस्तु मे वृद्धविटः कोपि ब्राह्मणः शनैः स्मितहेतुमपृच्छत् । अब्रवं च । कथमिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटपुरुषैरसमीक्ष्य बलाकाजातिस्ताम्रचूडो बलप्रमाणाधिकस्यैव प्रतिविसृष्ट इति । सोपि तज्ज्ञः किमज्ञैरेभिर्व्युत्पादितैस्तत्तूष्णीमास्स्वेत्युपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा चित्राः कथाः कथयन्क्षणमतिष्ठत् । प्रायुध्यत चातिसंरब्धमनुप्रहार-

1. °हृदयां B. C. W:—3. B. has a gap here from गतस्ते शापः to शिरस्युपाघ्राय— 6. अस्मिन्नज्ञानात् W.— 8. अन्योन्यं W.— 9. कन्यायाननुगृह्य A.— 10. इयं A.— लब्धलक्षो A. लब्धलक्षणो W.—12. C. W. omit तदेव.—वृत्तं C. W.— 13. प्रत्युपसर्पयं C. W.— 14. °विह्वला W.— 15. A. here and elsewhere, श्रावंती.— 18. शनकैः W. C. omit the word.—नारिकेरक C. नारिकेल W.— 21. A. writes उपदासिकायाः

प्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहंगमद्वयम् । जितश्चासौ प्रतीच्यवाटकुक्कुटः । सोपि विटब्राह्मणः स्ववाटकुक्कुटविजयहृष्टो मयि वयोविरुद्धं सख्यमुपेत्य तदहः स्वगृह एव स्नानभोजनादि कारयित्वोत्तरेद्युः श्रावस्तीं प्रतियान्तमनुगम्य स्मर्तव्योस्मि सत्यर्थ इति मित्रवद्विसृज्य प्रत्ययासीत् ।

अहं च गत्वा श्रावस्तीमध्वश्रान्तो बाह्योद्याने लतामण्डपे शयितोस्मि । हंसकरवप्रतिबोधितश्चोत्थाय कामपि क्वणन्नूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसरन्तीं युवतीमद्राक्षम् । सा त्वागत्य स्वहस्तवर्तिनि चित्रपटे लिखितं मत्सदृशं किमपि पुंरूपं मां च पर्यायेण निर्वर्णयन्ती सविस्मयं सतर्कं च क्षणमवातिष्टत । मयापि चित्रपटे तत्र मत्सादृश्यं पश्यता तस्याश्च तद्दृष्टिचेष्टितमनाकस्मिकं मन्यमानेन ननु सर्वसाधारणोयं रमणीयः पुण्यारामभूमिभागः किमिति चिरं स्थितिक्लेशोनुभूयते ननूपवेष्टव्यमित्यभिहिता सा सस्मितमनुगृहीतास्मीति न्यषीदत् । संकथा च देशवार्तानुबद्धा कात्रनावयोरभूत् । कथासंश्रिता च सा देशातिथिरसि । दृश्यन्तेध्वश्रान्तानीव गात्राणि । यदि न दोषो मद्गृहेद्य विश्रमितुमनुग्रहः क्रियतामित्यशंसत् । अहं च मुग्धे नैष दोषो गुण एवेति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिनोपचरितः सुखनिषण्णो रहसि पर्यपृच्छ्ये । महाभाग दिगन्तराणि भ्रमता क्वचिदस्ति किंचिदद्भुतं भवतोपलब्धमिति । ममाभवन्मनसि । महदिदमाशास्पदम् । एषा खलु निखिलपरिजनसंवाधसंलक्षितायाः सख्येव राजदारिकायाः । चित्रपटे चास्मिन्नस्ति तदुपरिविरचित-

1. °स्वपक्षं प्रवृत्त A. अनुप्रहारप्रवृत्तकण्ठीरवरवं B. with a mark of something omitted.— 2. विट· W.— 3. तदहरेव स्वगृहे.— 4. प्रयान्तम् W.— 9. रूपं A. कमपि पुरुषं C. W.— 10. मवितर्कं B. सवितर्कं· सहर्षं C. W.— 11. तत्र चित्रपटे C. W.—12. A. omits रमणीयः.— 14. °अनुविद्धा B. W.— 15. दृश्यन्ते च ते C. W.— 17. अहं चापि W.— 19. दुष्टं B. W.—21 °संबाधलक्षितासख्येव A. संबाधस (*sic*) लक्षितास (*sic*) सख्येव B. W. omits एव.

सितवितानं हर्म्यतलं तद्गतं च प्रकामविस्तीर्णं शरदभ्रपटलपाण्डुरं शयनं तदधिशायिनी च निद्रालीढलोचना ममैवेयं प्रतिकृतिः। अतो नूनमनङ्गेन सापि राजकन्या तावतीं भूमिमारोपिता यस्यामसह्यकामज्वरोन्माथिता सखीनिर्बन्धपृष्टविक्रियानिमित्ता चातुर्यादेतद्रूपनिर्माणेनैव समर्थमुत्तरं दत्तवती। रूपसंवादाच्च संशयानयाऽनयापृच्छ्ये भिन्दान्यस्याः संशयं यथानुभवकथनेनेति जातनिश्चयोऽब्रवम्। भद्रे देहि चित्रपटमिति। सा त्वर्पितवती मद्धस्ते। पुनस्तमादाय तामपि व्याजसुप्तामुल्लसन्मदनरागविह्वलां वल्लभामेकत्रैवालिख्य काचिदेवंभूता युवतिरीदृशस्य यूनः पार्श्वशायिन्यरण्यान्यां प्रसुप्तेन मयोपलब्धा। न किलैष स्वप्न इत्यालपं च। हृष्टया तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम्। असौ च सख्या मन्निमित्तान्यवस्थान्तराण्यवर्णयत्। तदाकर्ण्य च तव यदि सख्या मदनुग्रहोन्मुखं मनो गमय कानिचिदहानि कमपि कन्यापुरे निराशङ्कनिवासकारणमुपायमारचय्यागमिष्यामीति कथंचिदेनामुपगमय्य गत्वा खर्वटं वृद्धविटेन समगंसि। स च ससंभ्रमं विश्रमय्य तथैव स्नानभोजनादि कारयित्वा रहस्यपृच्छत्। आर्य कस्य हेतोरचिरेणैव प्रत्यागतोसि। अहं पुनः प्रत्यवादिषमेनम्। स्थान एवार्येण पृष्टः। श्रूयताम्। अस्ति श्रावस्ती नाम नगरी। तस्याः पतिरपर इव धर्मपुत्रो धर्मवर्धनो नाम राजा। तस्य दुहिता प्रत्यादेश इव श्रियः प्राणा इव कुसुमधन्वनः सौकुमार्यविडम्बितनवमालिका नवमालिका नाम कन्या। सा मया समापत्तिदृष्टा कामनाराचपङ्क्तिमिव कटाक्षमालां मम मर्मणि व्यकिरत्। तच्छल्योद्धरणक्षमश्च धन्वन्तरिसदृशोपि त्वदृते नेतरोस्ति वैद्य इति प्रत्यागतोस्मि।

---

3. यस्मात् A.— 4. °न्मथिता सती C. W.— चातुर्येण W.—5. संशयादनया- पृष्टो W.—6. भिनिदानि B. भिन्दानि C. भिनद्मि W.— 8. तत्रैव C. W.— अभिलिख्य W.—9. पुनः for यूनः A. W.—10. दृष्टयानया (omitting तु) A.— 12. यदि तव W.— सख्यामनुग्रहोन्मुखं A.— 13. निःशङ्कं A.— 16. अचिरात् W.—17. W. omits अहं पुनः.—अस्मि पृष्टः W.—21. कन्यका W.— 22. व्याकिरत् C.

तत्प्रसीद कंचिदुपायमाचरितुमर्हसि । अयमहं परिवर्तितस्त्रीवेषः कन्या नाम ते भवेयम् । अनुगतश्च मया त्वमुपगतो धर्मासनगतं धर्मवर्धनमेवं वक्ष्यसि । ममेयमेकैव दुहिता जाता । जातमात्रायां त्वस्यां जनन्यस्याः संस्थिता । माता च पिता च भूत्वाहमेव व्यवर्धयम् । एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोभूदवन्तिनगरीमुज्जयिनीमस्मद्वैवाह्यकुलजः कोपि विप्रदारकः । तस्मै चेयमनुमता न दातुमितरस्मै योग्या । तरुणीभूता चेयम् । स च विलम्बते । ततस्तमानीय पाणिमस्या ग्राहयित्वा तस्मिन्न्यस्तभारः संन्यसिष्ये । दुरभिरक्षतया तु मुक्तशैशवानां दुहितॄणां विशेषतोमातृकाणामिह देवं मातृपितृस्थानीयं प्रजानामापन्नशरणमागतोस्मि । यदि वृद्धं ब्राह्मणमधीतिनमगतिं च मामनुग्राह्यपक्षे गणयत्यादिराजचरितधुर्यो देवः सैषा भवद्भुजच्छायामखण्डितचारित्रा तावदध्यास्तां यावदस्याः पाणिग्राहकमानयेयमिति । स एवमुक्तो नियतमभिमनायमानः स्वदुहितृसंनिधौ मामावासयिष्यति । गतस्तु भवानागामिनि मासि फाल्गुने फाल्गुनीषूत्तरासु भाविनि राजान्तःपुरजनस्य तीर्थयात्रोत्सवे तीर्थस्थानात्प्राच्यां दिशि गोरुतार्धमन्तरमतीत्य वानीरवलयमध्यवर्तिनि कार्तिकेयगृहे करतलगतेन शुक्लांशुकयुगलेन स्थास्यसि । स खल्वहमनभिशङ्कस्तावन्तं समयमभिविहृत्य राजपुत्र्या सह भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि विहरन्विहारव्याकुले कन्यकासमाजे मग्नोपप्लुतस्त्वदभ्याश एवोन्मङ्क्ष्यामि । पुनस्त्वदुपहृते च वाससी परिधायापनीतदारिकावेषो जामाता नाम भूत्वा त्वामेवानुगच्छेयम् । नृपात्मजा-

1. किंचित् A.—आरचयितुं C. आचरितुं W.—W. omits अर्हसि.—2. ते कन्या नाम W.—3. C. W. omit जाता B. has a gap here.— 4. ममेय माता पिता च भूत्वा (*sic*). —5. एतदर्थं च A.— 7. दातुमितरस्मै न योग्या W.—विलम्बितः W.—9. दुरारक्षतया C.—विशेषतश्चामातृकाणां W.— 10. आपन्नः A. आपन्नानां C. W.—11. अगतिमतिथिम. 12.—भुजतरु B. W. भुजद्रुम C. छायाया B. W.— 15. C. omits फाल्गुने.—तीर्थयात्रोत्सवो भविष्यति W.— 16. गोरुतान्तरं B. W. C. has our reading corrected into that of B. W.—18. काले W.—20. C. W. omit च.

तु मामितस्ततोन्विष्यानासादयन्ती तया विना न भोक्ष्य इति रुदितवत्यवस्थास्यते । तन्मूले च महति कोलाहले क्रन्दत्सु परिजनेषु रुदत्स्ववरोधजनेषु शोचत्सु पौरजनपदेषु किंकर्तव्यतामूढे सामात्ये पार्थिवे त्वमास्थानीमेत्य मां स्थापयित्वा वक्ष्यसि । देव स एष मे जामाता तवार्हति श्रीभुजाराधनम् । अधीती चतुर्ष्वाम्नायेषु गृहीती षट्स्वङ्गेष्वान्वीक्षिकीविचक्षणश्चतुःषष्टिकलागमप्रयोगचतुरो विशेषेण गजरथतुरगतन्त्रविदिष्वस्त्रकर्मणि गदायुद्धे च निरुपमः पुराणेतिहासकुशलः कर्ता काव्यनाटकाख्यायिकानां वेत्ता सोपनिषदोर्थशास्त्रस्य निर्मत्सरो गुणेषु विश्रम्भी सुहृत्सु शक्यः संविभागशीलः श्रुतधरो गतस्मयश्च । नास्य दोषमणीयांसमप्युपलभे । न च गुणेष्वविद्यमानम् । तन्मादृशस्य ब्राह्मणमात्रस्य न लभ्य एष संबन्धी । दुहितरमस्मै समर्प्य वार्धकोचितमन्त्यमाश्रमं संक्रमेयं यदि देवः साधु मन्यत इति । स इदमाकर्ण्य वैवर्ण्याक्रान्तवक्त्रः परमुपेतो वैलक्ष्यमारप्स्यतेनुनेतुमनित्यतादिसंकीर्तनेनात्रभवन्तं मन्त्रिभिः सह । त्वं तु तेषामदत्तश्रोत्रो मुक्तकण्ठं विरुद्य बाष्पकुण्ठकण्ठः काष्ठान्याहृत्याग्निं संधुक्ष्य राजद्वार एव चिताधिरोहणायोपक्रमिष्यसे । स तावत्तव पादयोर्निपत्य सामात्यो नरपतिरनूनैरर्थैरुपच्छन्द्य दुहितरं मे दत्त्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यते । सोयमभ्युपायोनुष्ठेयो यदि तुभ्यं रोचत इति । सोतिपटुर्विटग्रामणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकं निपुणमुपक्रान्तवान् । आसीच्चात्मसमीहितानामहीनकालसिद्धिः । अन्वभवं च मधुकर इव नवमालिकामार्द्र-

2. मदन्येन W.—3. अवरोधनेषु B. अवरोधेषु C. सर्वजनेषु W.—7. A. omits अस्त्र.—12. संक्रमेयं A.—13. A. omits वैवर्ण्य.—15. रुदित्वा विरस्य C. W.—16. राजमन्दिरद्वारे W.—C. W. omit एव.—17. उपक्रमिष्यस (sic) A. उपक्रमिष्येसस्य (sic) पादयोः B.—W. उपच्छन्द्य C.—20. सोतिश्चतिदुः (sic) B. सोपि पटु· W.—विटानामग्रणीः W.—21. 22. अहीनकल M. A. अहीनकाला B.

सुमनसम् । अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्संकेतभूमिगमनं द्वयमप्यवेक्ष्य सर्वबलसंदोहेन चम्पामिमामुपगतो दैवाद्भवद्दर्शनोत्सवसुखमनुभवामीति । श्रुत्वैतत्प्रमतिचरितं स्मितमुकुलितमुखनलिनो विलासप्रायमूर्जितं मृदुप्रायं चेष्टितमिष्ट एष मार्गः प्रज्ञावतामथेदानीमत्रभवान्प्रविशत्विति मित्रगुप्तमैक्षत क्षितीशपुत्रः ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते प्रमतिचरितं
नाम पञ्चम उच्छ्वासः ॥

## । अथ षष्ठ उच्छ्वासः ।

स चाचचक्षे । देव सोऽहमपि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य नगरस्य बाह्योद्याने महान्तमुत्सवसमाजमालोकयम् । तत्र क्वचिदतिमुक्तलतामण्डपे कमपि वीणावादेनात्मानं विनोदयन्तं युवानमद्राक्षम् । अप्राक्षं च । भद्र को नामायमुत्सवः किमर्थं वा समारब्धः केन वा निमित्तेन पुनरुत्सवप्रियजनमपहायैकान्ते मदनोत्कण्ठित इव परिवादिनीद्वितीयस्तिष्ठसीति । सोऽभ्यधत्त । सौम्य सुह्मपतिस्तुङ्गधन्वा नामानपत्यः प्रार्थितवानमुष्मिन्नायतने विस्मृतविन्ध्यवासरागं वसन्त्या विन्ध्यवासिन्याः पादमूलादपत्यद्वयम् । अनया च किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम् । तव चैकः पुत्रः समुत्पत्स्यते । जनिष्यते चैका दुहिता । स तु पुत्रस्तस्याः पाणिग्राहकमनुजीविष्यति । सा च सप्तमाद्वर्षादारभ्यापरिणयनात्प्रतिमासं कृत्तिकासु कन्दुकनृत्तेन गुणवद्भर्तृलाभाय मां समाराधयतु । यं च साभिलषेत्तस्मै देया । स चायमुत्सवः कन्दुकोत्सवनामास्त्विति । ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नामैकं पुत्रमसूत । समजनि चैका दुहिता । साद्य कन्या कन्दुकावती नाम सोमापीडां देवीं कन्दुकविहारेणाराधयितुमागमिष्यति । तस्यास्तु सखी धात्रेयिका चन्द्रसेना नाम मम प्रियासीत् । सा चैषु दिवसेषु राजपुत्रेण भीमधन्वना बलवदवरुद्धा । तदहमुत्कण्ठितो मन्मथशरशल्यदुःखाविष्टचेताः कलेन वीणारवेणात्मानं किंचिदाश्वासयन्विविक्तमध्यास इति ।

अस्मिन्नेव क्षणे किमपि मणिनूपुरक्वणितमुपातिष्ठत । आगता च काचिदङ्गना । दृष्ट्वैव स एनामुत्फुल्लदृष्टिरुत्थायोपगृह्य गाढमुपगूढकण्ठश्च तया तत्रैवोपाविशत् । अशंसच्च । सैषा मम प्राणसमा [illegible]

5. C. W. omit उत्स.— 7. विस्मृते W. also M. So also C. but corrected to our reading.— 9. B. omits च. [illegible] W.—10. C. W. omit पुत्रः.— 11. तत्र W.— 12. [illegible] W.— 13. W. omits [illegible].— [illegible] B. W.— 15. [illegible] C. W.— 16. [illegible] C. W.— 18. [illegible] W.— 19. W. omits [illegible].— [illegible] A.— 21. [illegible] W.—22. [illegible] C. W.— 23. after [illegible] M.

दहन इव दहति माम् । इदं मे जीवितमपहरता राजपुत्रेण मृत्युनेव निरुष्मतां नीतोहम् । न च शक्ष्यामि राजसूनुरित्यमुष्मिन्पापमाचरितुम् । अतो नयात्मानं सुदृष्टं कारयित्वा । त्यक्ष्यामि निष्प्रतिक्रियान्प्राणानिति । सा तु पर्यश्रुमुखी समभ्यधात् । मा स्म नाथ मत्कृतेध्यवस्यः साहसम् । यस्त्वमुत्तमात्सार्थवाहादर्थदासादुत्पद्य कोशदास इति गुरुभिरभिहितनामधेयः पुनर्मदत्यासङ्गाद्वेशदास इति द्विषद्भिः प्रख्यापितोसि तस्मिंस्त्वय्युपरते यद्यहं जीवेयं नृशंसो वेश इति समर्थयेयं लोकवादम् । अतोद्यैव नय मामीप्सितं देशमिति । स तु मामभ्यधत्त । भद्र भवद्दृष्टेषु राष्ट्रेषु कतमत्समृद्धं संपन्नशस्यं सत्पुरुषभूयिष्ठं चेति । तमहमीषद्विहस्याब्रवम् । भद्र विस्तीर्णेयमर्णवाम्बरा । न पर्यन्तोस्ति स्थानस्थानेषु रम्याणां जनपदानाम् । अपि तु न चेदिह युवयोः सुखनिवासकारणं कमप्युपायमुत्पादयितुं शक्नुयां ततोहमेव भवेयमध्वदर्शीति । तावतोदीरत रणितानि मणिनूपुराणाम् । अथासौ जातसंभ्रमा प्राप्तैवेयं भर्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीमाराधयितुम् । अनिषिद्धदर्शना चेयमस्मिन्कन्दुकोत्सवे । सफलमस्तु युष्मच्चक्षुः । आगच्छतं द्रष्टुम् । अहमस्याः सकाशवर्तिनी भवेयमित्ययासीत् । तामन्वयाव चावाम् । महति रत्नरङ्गपीठे स्थितां प्रथमं ताम्रोष्ठीमपश्यम् । अतिष्ठच्च सा सद्य एव मम हृदये । न मयान्येन वान्तराले दृष्टा । चित्रीयाविष्टचित्तश्चाचिन्तयम् । किमियं लक्ष्मीः । नहि नहि । तस्याः किल हस्ते कमलम् । अस्यास्तु हस्त एव कमलम् । भुक्तपूर्वा च सा पुरातनेन पुंसा पूर्वराजैश्च । अस्याः पुनरनवद्यमयातयामं च यौवनम् । इति चिन्तयत्येव मयि सानवद्यसर्वगात्री व्यत्यस्तहस्त-

---

1. इदं च जीवितं मे C. इदं च मे जीवितं W.— मृत्युरेव B.— 2. A. drops a line here. 2. वैरमारोपयितुम्—4. तमभ्यधात् M.—5. कोसदास A.— 11. स्थाने स्थाने W.— 17. W. omits इति.— 19. मद्धृदये B. मे C. W.— च C. W. (corrected in C.) अन्येनच W.—19. अन्यैवान्तराले M.— 21. किस्या (*sic*) B. विन्यस्तकमलं W.— 22. अस्यां W.— 23. हस्तात्रे C.

पल्लवाग्रस्पृष्टभूमिरालोलनीलकुटिलालका ससंभ्रमं भगवतीं भवानीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत। लीलाशिथिलं च भूमौ मुक्तवती। मन्दोत्थितं च किंचित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहत्य हस्तपृष्ठेन चोन्नीय चटुलदृष्टिलाञ्छितं स्तवकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत्। अमुञ्चच्च मध्यविलम्बितलये द्रुतलये च। मृदुमृदु च प्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत्। प्रशान्तं च तं निर्दयप्रहारैरुदपातयत्। विपर्ययेण च प्राशमयत्। पक्षमृज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नती शकुन्तमिवोदस्थापयत्। दूरोत्थितं तु प्रपतन्तमभिहत्य गीतमार्गमारचयत्। प्रतिदिशं च गमयित्वा प्रत्यागमयत्। एवमनेककरणमधुरं विहरन्ती रङ्गगतस्य च रक्तचेतसो जनस्य प्रतिक्षणमुच्चावचाः प्रशंसावाचः प्रतिगृह्णती तत्क्षणारूढविश्रम्भं कोशदासमंसेऽवलम्ब्य कण्टकितगण्डमुत्फुल्लेक्षणं च मय्यभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकन्दर्पकारितकटाक्षदृष्टिस्तदनुमार्गविलासितलीलाञ्चितभ्रूलता श्वासानिलवेगान्दोलितैर्दन्तच्छदरश्मिजालैर्लीलापल्लवैरिव मुखकमलपरिमलग्रहणलोलानलिनस्ताडयन्ती मण्डलभ्रमणेषु कन्दुकस्यातिशीघ्रप्रचारितया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरं पञ्चबिन्दुप्रसृतेषु पञ्चापि पञ्चबाणबाणान्युगपदिवाभिपततस्त्रासेनावघट्टयन्ती गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती भूषणमणिरणितदत्तलयसंवादिपादचारमपदेशस्मितप्रभाभिषिक्तबिम्बाधरमवस्रंसितमतिसमाहितशिखण्डभारमाघट्टितक्वणितरत्नमेखलागुणमाञ्चितोत्थितपृथुनितम्बबिम्बलम्बिचलदंशुकाञ्चलमाकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकमावर्जितबाहुपाशं परिवर्तितत्रिकविलग्नलोलकुन्तलमव-

1. सविभ्रमं W.—C. W. omit भवानीं.—6. °विलम्बिते लये B. C.—B. omits अमृदु च. मृदु मृदु च C. मृदु मृदु W.—7. A. C. omit च before प्राशमयत्.—8. °आगतं A. C.—9. च for तु C. W.—आहत्य C. W.—10. आचरत for आचरयत W.—12. रूढविभ्रमम् M.—14. भ्रूपताका M.—16. मंगलभ्रमणेषु A.—17. °प्रचारतया B. W.—21. °गुणं प्रपंचितोत्थित (sic) C.—23. °बाहुपाशानुतिर्यक्परिवर्ति° A. So also C., with a correction to our reading.

गलितकर्णपूरकनकपत्त्रप्रतिसमाधानशीघ्रतानतिक्रमितप्रकृतक्रीडमसकृदुत्क्षिप्यमाणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकमवनमनोन्नमननैरन्तर्यनष्टदृष्टमध्ययष्टिकमवपतनोत्पतनविपर्यस्तमुक्ताहारङ्कुमारितघर्मसलिलदूषितकपोलपत्त्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलमागलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवं च निपद्योत्थाय निमील्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या । अभिहत्य भूतलाकाशयोरपि क्रीडान्तराणि दर्शनीयान्येकेनैवानेकेनेव कन्दुकेनादर्शयत् । चन्द्रसेनादिभिश्च प्रियसखीभिः सह विहृत्य विहृतान्ते चाभिवन्द्य देवीं मन्मनसा सानुरागेण परिजनेन चानुगम्यमाना कुवलयशरमिव कुसुमशरस्य मय्यपाङ्गं समर्पयन्ती सापदेशमसकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपप्रेषितं प्रतिनिवृत्तं न वेत्यालोकयन्ती सह सखीभिः कुमारीपुरमगमत् ।

अहं चानङ्गविह्वलः स्वमेव वेश्म गत्वा कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोस्मि । सायं चोपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य पत्युरंसमंसेन प्रणयपेशलमाघट्टयन्त्युपाविशत् । आचष्ट च हृष्टः कोशदासः । भूयासमेवं यावदायुरायताक्षि त्वत्प्रसादस्य पात्रमिति । मया तु सस्मितमभिहितम् । सखे किमेतदाशास्यम् । अस्ति किंचिदञ्जनम् । अनया यद्रक्तनेत्रया राजसूनुरुपस्थितो वानरीमिवैनां द्रक्ष्यति विरक्तश्चैनां पुनस्त्यक्ष्यतीति । तया तु स्मेरयास्मि कथितः । सोयमार्येणाज्ञाकरो जनोत्यर्थमनुगृहीतः । यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वानरीकरिष्यते । तदास्तामिदम् । अन्यथापि सिद्धं नः समीहितम् । अद्य खलु कन्दुको-

1. आगलित A.— 1. क्रीडनं W.— 3. निर्व्यवस्था for विपर्यस्त W. & M.— 5. B. C. omit च.— 7. दर्शनीयान्येकेनैव कंडुकेन A. एकैव (*sic*) कंडुकेन C. एकेनैव वानेकेनैव W.—7. अनेकान्येकेनैव M. ys.— 8. विहृता A.— 9. सानुरागेणेव A. W. W. omits च.— 11. मत्समीपे W. मत्समीपप्रेषितं C.— 13. अनंगविद्धः A.— कोशदासेन सह C.— 14. अत्युदार° A.— 15. प्रणयपेशलया W.— 15. रहसि om. W.— 21. मानुष. A.

रसत्रे भवन्तमवहसितमनोभवाकारमभिलषन्ती रोषादिव शम्बरद्विषातिमात्रमायास्यते राजपुत्री । सोयमर्थो विदितभावया मया त्वमात्रे तया च तन्मात्रे महिष्या च मनुजेन्द्राय निवेदयिष्यते । विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति । ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम् । एष एव दैवतसमादिष्टो विधिः । त्वदायत्ते च राज्ये नालमेष त्वामतिक्रम्य मामवरोद्धुं भीमधन्वा । तत्सह्यतामयं त्रिचतुराणि दिनानि । इति मामामन्त्र्य प्रियं चोपगूह्य प्रत्ययासीत् । मम च कोशदासस्य च तदुक्तानुसारेण बहु विकल्पयतोः कथंचिदक्षीयत क्षपा । क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियादर्शनसुभगमुद्यानोद्देशमुपगतोस्मि । तत्रैव चोपसृत्य राजपुत्रो निरभिमानमनुकूलाभिः संकथाभिर्मामनुवर्तमानो मुहूर्तमास्त । नीत्वा चोपकार्यामात्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत् । तल्पगतं च स्वप्नानुभूयमानप्रियादर्शनालिङ्गनसुखमायसेन निगडेनातिबलपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम् । प्रतिबुद्धं च सहसा समभ्यधात् । अयि दुर्मते श्रुतमालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टावबोधप्रयुक्तयानया कुब्जया । त्वं किलाभिलषितो वराक्या कन्दुकावत्या । तव किलानुजीविना मया स्थेयम् । त्वद्वचः किलानतिक्रमता मया चन्द्रसेना कोशदासाय दास्यते । इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत् । प्रक्षिपैनं सागर इति । स तु लब्धराज्य इवातिहृष्टो देव यदाज्ञापयसीति यथादिष्टमकरोत् । अहं तु निरवलम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तमुरसोपश्लिष्य तावदप्लोषि यावदपासरद्वासरः शर्वरी च सर्वा । प्रत्यूषस्यदृश्यत किमपि वहित्रम् । अमुत्रासन्यवनाः । ते मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः । कोप्ययमायस-

---

1. अवहसित A.— C. omits त्व निरमन्द्रेन—4. A. B. C. ग्राहयिष्यतीति.— 6. एत for एष C. W. —10. उपागतोऽस्मि B. W.—18. न निकृन्तते चन्द्रसेना.— 19. A. omits एनं.— 20. यथाज्ञापयसीति A — 23. A. omits किमपि.

निगडबद्ध एव जले लङ्घ्यः पुरुषः । सोऽयमपि क्षिप्येत्यहस्तं द्राक्षाणां क्षणेनैकेनेति । अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत् । अबिभयुर्यवनाः । तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यदल्लन । प्रावर्तत च संप्रहारः । पराजेषत यवनाः । तानहमगतीनवलीढः समाश्वास्यात्मपिधम् । अपनयत मम निगडबन्धनम् । अयमहमवसादयामि वः सपत्नानिति । अमी तथाकुर्वन् । सर्वांश्च तान्प्रतिभटान्भल्लवर्षिणा भीमटंकृतेन शार्ङ्गेण लवलीकृताङ्गानकार्षम् । अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तपोतमनुव नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम् । असौ चासीत्स एव भीमधन्वा । तं चाहमवबुध्य सव्रीडमब्रवम् । तात किं दृष्टानि कृतान्तविलसितानीति । ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवमकुर्वन्मां चापूजयन् ।

दुर्वारा तु सा नौरननुकूलवातनुन्ना दूरमभिपत्य किमपि द्वीपान्तरं निविडमाश्लिष्टवती । तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि च संजिघृक्षवो गाढपातितशिलावलयमवातराम । तत्र चासीन्महाशैलः । सोऽहमहो रमणीयोऽयं पर्वतनितम्बभागः कान्ततरेयं गन्धपाषाणवत्युपत्यका शिशिरमिदमिन्दीवरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि रम्योऽयमनेकवर्णकुसुममञ्जरीमञ्जुलतरुषण्डवनाभोग इत्यनुतनरया दृशा बहु पश्यन्नलक्षिताभ्यारूढक्षोणीधरशिखरः शोणीभूतमुख्यभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समभ्यगमम् । तत्र स्नातश्च कांश्चिदमृतस्वादून्बिसभङ्गानास्वाद्यावतंसयकह्लारस्तारवर्तिना केनापि भीमरूपेण ब्रह्म-

1. बद्धमब्धौ जले बद्धः पुरुषः A. M. B. omits पुरुषः.—3. अतिजवा नौकाः A. अतिजवाः B.— 4. C. W. omit च.— पराजेषत B.— 5. ... W.—नैगडं बैबन्धं निगडबन्धनं A. B.—8. संसक्त A.—9. अनभिसरन्त (sic) A.—12. हर्षजातं किलिकिलारवं A.—13. दुर्वारा B. दुर्वार्या W. and M.— कमपि द्वीपान्तरं A. B. C. कमपि द्वीपं स्वांश्च च A.—15. C. omits फल.—पातित A. W.—16. महाशैलोऽसौ B.—18. चन्द्रकोत्तरङ्ग सरवारि नंजरीनिरस्त° A.— 19. बहुबहु W.— 21. तत्र स्नात्वा तत्र. A. B. W. omits तत्र.

राक्षसेनाभिपत्य कोसि कुतस्त्योसीति निर्भर्त्स्यियताभ्यधीये । निर्भयेन च मया सोभ्यधीयत । सौम्य सोहमास्मि द्विजन्मा । शत्रुहस्तादर्णवमर्णवाद्यवननावं यवननावश्चित्रग्रावाणमेनं पर्वतप्रवरं गतो यदृच्छयास्मिन्सरसि विश्रान्तः । भद्रं तवेति । सोब्रूत । न चेद्ब्रवीषि प्रश्नानश्नामि त्वामिति । मयोक्तम् । पृच्छ तावत् । भवत्विति । अथावयोरेकयार्ययासीत्संलापः

किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः ।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा ॥

इतीयदुक्त्वा धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणमित्युपदिष्टे मया सोब्रूत । कथय कीदृश्यस्ता इति । अथोदाहरम् ।

अस्ति त्रिगर्तो नाम जनपदः । तत्रासन्गृहपतयस्त्रयः स्फीतसारधनाः सोदर्या धनकधान्यकधन्यकाख्याः । तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः । क्षीणसारं सस्यमोषधयो वन्ध्या न फलवन्तो वनस्पतयः क्लीबा मेघा भिन्नस्रोतसः स्रवन्त्यः पङ्कशेषाणि पल्वलानि · निःस्यन्दान्युत्समण्डलानि विरलीभूतं कन्दमूलफलमवहीनाः कथा गलिताः कल्याणोत्सवक्रिया बहुलीभूतानि तस्करकुलान्यन्योन्यमभक्षयन्प्रजाः पर्यलुण्ठन्नितस्ततो बलाकापाण्डुराणि नरशिरःकपालानि पर्यहिण्डन्त शुष्काः काकमण्डल्यः शून्यीभूतानि नगरग्रामखर्वटपुटभेदनादीनि । त एते गृहपतयः सर्वधान्यनिचयमुपयुज्याजाविकं गवलगणं गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यमभार्ये च क्रमेण भक्षयित्वा कनिष्ठभार्या धूमिनी श्वो भक्षणीयेति समकल्पयन् । अथ कनीयान्धन्यकः प्रियां स्वामत्तुमक्षमस्तया सह तस्यामेव निश्यपासरत् । मार्गक्लान्तां चोद्वहन्वनं जगाहे । स्वमांसासृगपनीतक्षुत्पिपासां तां नयन्नन्तरा कमपि निकृत्तपाणिपादकर्ण-

3. एतं पर्वतप्रदेशं B.— 9. W. omits इति.—10. सोब्रवीत् B.— 11. त्रिगर्तो A. गर्तो B. अस्ति च त्रिगर्तो C.— 17. पर्यलुठन् A. W.—20. गवलगणं B. C. W.— 24. अन्तरे C. W.—अतिनिकृत्त B. कृत C.

नासिकमवनिपृष्ठे विचेष्टमानं पुरुषमद्राक्षीत् । तमप्यार्द्राशयः स्कन्धेनोद्वहन्कन्दमूलमृगबहुले गहनोद्देशे यत्नरचितपर्णशालश्चिरमवसत् । अमुं च रोपितव्रणमिङ्गुदीतैलादिभिरामिषेण शाकेनात्मनिर्विशेषं पुपोष । पुष्टं च तमुद्रिक्तधातुमेकदा मृगान्वेषणाय प्रयाते धन्यके सा धूमिनी रिरंसयोपातिष्ठत् । भर्त्सितापि तेन बलात्कारादथारीरमत् । निवृत्तं च पतिमुदकाभ्यर्थिनमुद्धृत्य कूपात्पिब रुजति मे शिरः शिरोरोग इत्युदञ्चनं सरज्जुं पुरश्चिक्षेप । उदञ्चन्तं च तं कूपादपः क्षणात्पृष्ठतो गत्वा प्रणुनोद । तं च विकलं स्कन्धेनोद्वह्य देशाद्देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं लेभे बहुविधाश्च पूजाः । पुनरवन्तिराजानुग्रहादतिमहत्या भूत्या तस्मिन्देशे न्यवसत् । अथ पानीयार्थिसार्थजनसमापत्तिदृष्टोद्धृतमवन्तिषु भ्रमन्तमाहारार्थिनं भर्तारमुपलभ्य सा धूमिनी येन मे पतिर्विकलीकृतः स दुरात्मायमिति तस्य साधोश्चित्रवधमज्ञेन राज्ञा समादेशयांचकार । धन्यकस्तु दत्तपश्चाद्बन्धो वध्यभूमिं नीयमानः सशेषत्वादायुषो यो मया विकलीकृतोभिमतो भिक्षुः स चेन्मे पापमाचक्षीत युक्तो मे दण्ड इत्यदीनमधिकृतमभिजगाद । को दोष इत्युपनीय दर्शितेमुष्मिन्स विकलः पर्यश्रुः पादपतितस्तस्य साधोस्तत्सुकृतमसत्याश्च तस्यास्तथाभूतं दुश्चरितमार्यबुद्धिराचचक्षे । कुपितेन च राज्ञा विरूपितमुखी सा दुष्कृतकारिणी श्वभ्यः पाचिका कृता । कृतश्च धन्यकः प्रसादभूमिः । तद्ब्रवीमि स्त्रीहृदयं क्रूरमिति ।

पुनरनुयुक्तो गोमिनीवृत्तान्तमाख्यातवान् । अस्ति द्रविडेषु काञ्ची नाम नगरी । तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत् । सोष्टादशवर्षदेशीयश्चिन्तामापेदे । नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम । तत्कथं नु गुणवद्विन्देयं कलत्रमिति । अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकीं संपत्तिमनभिसमीक्ष्य

---

2. आरचित A — 6. पिब जलं C. W.—तुदति C.— 10. C. W. omit तस्मिन्देशे.—13. आनीयमानः C.— 14.- M. omit अभिमत- 15. अभिजगाम A.—18. कृत्यश्वभ्यः पाचिका कृता B. कृताश्वभ्यः पाचिका C. W.—23. विधेयं W.

कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम । लक्षणज्ञोयमित्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयांबभूवुः । यां कांचिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति । भद्रे शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुमिति । स हसितावधूतो गृहाद्गृहं प्रविश्याभ्रमत् । एकदा तु शिबिषु कावेरीतीरपत्तने सह पितृभ्यामवसितमहर्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां कांचन विरलभूषणां कुमारीं ददर्श । अस्यां संसक्तचक्षुश्चातर्कयत् । अस्याः खलु कन्यकायाः सर्व एवावयवा न कृशा न स्थूला नातिह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च । रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ । समगुल्फसंधी मांसलावशिरालौ चाङ्घ्री । जङ्घे चानुपूर्ववृत्ते । पीवरोरुग्रस्ते इव दुरुपलक्ष्ये जानुनी । सकृद्विभक्तश्चतुरस्रः ककुन्दरविभागशोभी रथाङ्गाकारसंस्थितश्च नितम्बभागः । तनुतरमीषन्निम्नं गम्भीरं नाभिमण्डलम् । वलित्रयेण चालंकृतमुदरम् । उरोविभागव्यापिनावुन्मग्नचूचुकौ विशालारम्भशोभिनौ पयोधरौ । धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी मृद्वनुपूर्ववृत्तताम्राङ्गुली संनतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसन्धी च बाहुलते । तन्वी कम्बुवृत्तबन्धुरा च कन्धरा । वृत्तमध्यविभक्तरागाधरमसंक्षिप्तचारुचिबुकमापूर्णकठिनगण्डमण्डलमसंगतानुवक्रनीलस्निग्धभ्रूलतमनतिप्रौढतिलकुसुमसदृशनासिकमसितधवलरक्तत्रिभागभासुरमधुराधीरसंचारमन्थरायतेक्षणमिन्दुशकलसुन्दरललाटमिन्द्रनीलशिलाकाररम्यालकपङ्क्ति द्विगुणकुण्डलितम्लाननालीकनालललितलम्बश्रवणपाशयुगलमाननकमलम् । अनतिभङ्गुरो बहुलः पर्यन्तेष्यकपिलरुचिरायामवानेकैकनिसर्गसमास्निग्धनीलो गन्धग्राही च

2. अमुष्माय W.—कन्यां A. C.— 3. C. omits स्म.— 5. कावेरीदक्षिणतीरे पट्टने W. कावेरीतीरपत्तने B.— 7. कांचन विरलभूषणां W.— 11. अनुपूर्व° A.—13. कुकुन्दर° W.— 15. °शोभितौ A.—17. ऋजु for मृदु C. W.— 22. °करालरम्य° A. °जाररम्य° (sic) B.— 23. °समालोलि A.— 24: स्निग्धनीलोज्ज्वलसुगन्धि गन्धग्राही M.

मूर्धजकलापः । सेयमाकृतिर्न व्यभिचरति शीलम् । आसज्जति च मे हृदयमस्याम् । अथ च परीक्ष्यैनामुद्वहेयम् । अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरंपरा इति स्निग्धदृष्टिराचष्ट । भद्रे कच्चिदस्ति कौशलं शालिप्रस्थेनानेन संपन्नमाहारमस्मानभ्यवहारयितुमिति । ततस्तया वृद्धदासी साकूतमालोकिता । तस्य हस्तात्प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत् । साथ कन्या तान्गन्धशालीन्मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदुमृदु घट्टयन्ती तुषैस्तण्डुलान्पृथक्चकार । जगाद च धात्रीम् । मातरेभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः । तेभ्य इमान्दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहरेति । तथा कृते तया तांस्तण्डुलाननतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितोत्क्षेपणावक्षेपणायासितभुजमसकृदङ्गुलीभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकादींस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत् । प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत । दर्व्या चावघट्ट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत् । इन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत् । एभिर्लब्धाः काकिणीर्दत्त्व शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानयेति । तथानुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य तदन्नमण्डमार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसंभारं दत्ताङ्गारधूपवासं च संपाद्य तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि

2. अस्यामेव च तत्परीक्ष्य B. C. अथ-omits च. अस्यामेव W.—7. आंधशालीन् A. B.—सा च कन्यका C W. omits-7. गन्धशालीन् संक्षुद्य M.—16. कणतुसादीन (sic) A. कर्णकिंतुसादीन् B.—25. लवणसंभार दत्वा धूपवासं चापाद्य M.

कृत्वा धात्रीमुखेन स्नानाय तमचोदयत् । तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ । स्नपितः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि शरावद्वयं दत्तमार्द्रमभिमृशन्नतिष्ठत् । सा तु तां पेयामेवाग्रे समुपाहरत् । पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत् । ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार । इमं च दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत् । सशेष एवान्धस्यसावतृप्यत् । अयाचत च पानीयम् । अथ नवभृङ्गारसंभृतमगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि धारात्मना पातयांबभूव । सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालितारुणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलः परिमलप्रवाहोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षावर्जितरसनेन्द्रियः स्वच्छं पानीयमाकण्ठं पपौ । शिरःकम्पसंज्ञावारिता च पुनरपरेण करकेणाचमनमदत्त कन्या । वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय क्षणमशेत । परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये । नीत्वैतदनपेक्षः कामपि गणिकामवरोधमकरोत् । तामप्यसौ प्रियसखीमिवोपाचरत् । पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत् । गृहकार्याणि चाहीनमन्वतिष्ठत् । परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत् । तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा

---

2. स्नातः C. W.—फलं A.— 3. पाडुकारित (sic) A. पांडुरिहतस्य (sic)— 4. आतिष्ठन A.— 5. W.—°गात्रं A.—6. उपदंशं A. B.—7. इदं C.— C. W. omit second च.—8. °काञ्जिकाभ्यां A.—9. अवतृप्यत W.—C. omits च.—10. A.—omits ग्रथित.—°सौरभवारि A. C.— 11. नालीधारात्मना W.—°उपहत A.— 12. A. omits कण.—कलित for करालित C.— 13. A. omits स्पर्श.—प्रवाल for प्रवाह A. W.— 14. तदच्छं for स्वच्छं C. W.— 16. कुट्टिमे चोत्तरीय° A.

तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश [ तद्ब्रवीमि गृहिणः प्रिय-हिताय दारगुणा इति ]।

ततस्तदनुयुक्तो निम्बवतीवृत्तमाख्यातवान् । अस्ति सौराष्ट्रेषु वलभी नाम नगरी । तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य नाविक-पतेर्दुहिता रत्नवती नाम । तां किल मधुमत्याः समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्यणैषीत् । तया च नववध्वा रहसि रभस-विघ्नितसुरतसुखो झटिति द्वेषमल्पेतरं बबन्ध । न तां पुनर्द्रष्टुमिष्टवान् । तद्गृहगमनमपि सर्वसुहृद्वाक्यशतातिवर्ती लज्जया परिजहार । तां च दुर्भगां तदा प्रभृत्येव नेयं रत्नवती निम्बवती चेयमिति परिजनः परिबभूव । गते च कस्मिंश्चित्काले सानुतप्यमाना का मे गतिरिति विमृशन्ती कामपि वृद्धप्रव्राजिकां मातृस्थानीयां देवशेषकुसुमैरुप-स्थितामपश्यत् । तस्याः पुरो रहसि सकरुणं रुरोद । तयाप्युदश्रुमुख बहुप्रकारमनुनीय रुदितकारणं पृष्टा त्रपमाणापि कार्यगौ वात्कथंचिदब्रवीत् । अम्ब किं ब्रवीमि । दौर्भाग्यं नाम जीवन्मृ मङ्गनानाम् । विशेषतश्च कुलवधूनाम् । तस्याहमस्म्युदाहरणं । मातृप्रमुखोपि ज्ञातिवर्गो मामवज्ञयैव पश्यति । तेन सुदृष्टां गौत् । न चेत्त्यजेयमद्य निष्प्रयोजनान्प्राणान् । आ विरामाच्च । स श्राव्यमिति पादयोः पपात । सैनामुत्थाप्योद्बाष्पोवा यथाहं माध्यवस्यः साहसम् । इयमस्मि त्वन्निदेशवर्तिनी । लुब्धाश्च योगस्तव तावद्भवास्यनन्याधीना । यद्येवासि निशास्वपि त्वं मदधिष्ठिता पारलौकिकाय कल्याणाय । नन्व सभमाकर्षन्तीं दुष्कृतस्य यदनेनाकारेणेदृशेन शीलेन जात्या सा संनिगृहीता । ...प च नूपुरश्चरणा-

2. दारगुण इति A. B. C. W.—3. पुनस्तेन C. ———
सुराष्ट्रेषु A.—4. गुह्यकेश्वर C.—C. omits तुल्य.-C. W.—7. सत्रासा A. B. गमेच्छा C. also M. विघ्नितसुखो W.—8. तद्गृहं सा भयापदेशात् W.—11 सर्वं. C. W. omit जन.—9. C. omits च.- C. omits मम.— 16. A. —12. अश्रुमुख्या A.—17. मे रहस्यं C. ...नः C. omits जन.— 22, W.—19. यावति.. तावति C. W.— 20. ... गृहीता W.

सत्यकस्मादेव भर्तृद्वेष्यतां गतासि । यदि कश्चिदस्त्युपायः पतिद्रोहप्रतिक्रियायै दर्शयामुम् । मतिर्हि ते पटीयसीति । अथासौ कथंचित्क्षणमधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्वमवोचत् । भगवति पतिरेव दैवतं वनितानां विशेषतश्च कुलजानाम् । अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किंचिदाचरणीयम् । अस्त्यस्मत्प्रातिवेश्यो वणिक् । अभिजनेन विभवेन राजान्तरङ्गभावेन च सर्वपौरानतीत्य वर्तते । तस्य कन्या कनकवती नाम मत्समानरूपावयवा ममातिस्निग्धा सखी । तया सह तद्विमानहर्म्यतले ततोपि द्विगुणमण्डिता विहरिष्यामि । त्वया तु तन्मातृप्रार्थनं नाम सकरुणमभिधाय मत्पतिरेतद्गृहं कथंचनानेयः । समीपगतेषु च युष्मासु क्रीडामत्ता नाम कन्दुकं भ्रंशयेयम् । अथ तमादाय तस्य हस्ते दत्त्वा वक्ष्यसि । पुत्र तवेयं भार्यासखी निधिपतिदत्तस्य सर्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम । त्वामियमनवस्थो निष्करुणश्चेति रत्नवतीनिमित्तमत्यर्थं निन्दति । तदेष कन्दुको विपक्षस्य· प्रत्यर्पणीयमिति । स तयोक्तो नियतमुन्मुखीभूय तामेव प्रियसखीं मा‌ऽमानो मां बद्धाञ्जलि याचमानायै मह्यं भूयस्त्वत्प्रार्थितः साभिकम्परयिष्यति । तेन रन्ध्रेणोपश्लिष्य रागमुज्ज्वलीकृत्य यथासौ तु तद्गुणो देशान्तरमादाय मां गमिष्यति तथोपपादनीयमिति । हर्षाव्यवधाय ानया तथैव संपादितम् । अथैतां कनकवतीति वृद्धतापसी नीत्वैतदनपेद बलभद्रः सरत्नसाराभरणामादाय निशि नीरन्ध्रे तमसि मित्रोपाचरत् । तु तापसी वार्त्तामापादयत् । मन्देन मया निर्निमिकार्याणि चाहीन वती श्वशुरौ च परिभूतौ सुहृदश्चातिवर्तिताः । तदत्रैव करोत । तद्गुण जिन्हेमीति बलभद्रः पूर्वेद्युर्मामकथयत् । नूनमसौ

2. स्नात C. W.—पतिराद्भविष्यतीति । तच्छ्रुत्वा तद्बान्धवास्तदन्वेषणं
4. आतिष्ठन A.— 5. W.-युः । रत्नवती तु मार्गे कांचित्पण्यदासीं
C. W. omit second च.—
च.—10. A.—omits युष्मासु C.— 9. °प्रार्थनं A. C. W.—10. B.
W.—°इपहत A.— 12. A. धनेन.—A. omits स.—मामेव C. omittimg मां
omits स्वर्ग.—प्रवाल for भवा सहर्षाभ्युपेतया तया C.— 18. तथैतां B. अथ तां
16. कुट्टिमे चोनर्ताय A. भूषणं (sic) C. W.—20 C. omits तु.

संगृह्य तयोह्यमानपाथेयाद्युपस्करा खेटकपुरमगमत् । अमुत्र च व्यवहारकुशलो बलभद्रः स्वल्पेनैव मूल्येन महद्धनमुपार्जयत् । कैरा-ग्ण्यश्चासीत् । परिजनश्च भूयानर्थवशात्समाजगाम । ततस्तां प्रथम-दासीं न कर्म करोषि :दृष्टं मुष्णास्यप्रियं ब्रवीषीति परुषमुक्त्वा दृढ-ताडयत् । चेटी तु प्रसादकालोपाख्यातरहस्यवृत्तान्तैकदेशमात्तरोषा निर्बिभेद । तच्छ्रुत्वा तु लुब्धेन दण्डवाहिना पौरवृद्धसंनिधौ निधि-पतिदत्तस्य कन्यकां कनकवतीं मोषेणापहृत्यास्मत्पुरे निवसत्येष दुर्मतिर्बलभद्रः । तस्य सर्वस्वहरणं न भवद्भिः प्रतिवन्धनीयमिति नितरामतर्जयत । भीतं च बलभद्रमभिजगाद रत्नवती । न भेतव्यम् । एवं ब्रूहि । नेयं निधिपतिदत्तस्य कन्या कनकवती । वलभ्यामेव गृहगुप्तदुहिता रत्नवती नामेयं दत्ता पितृभ्यां मया च न्यायोढा । न चेत्प्रतीथ प्रणिधिं प्रहिणुतास्या बन्धुपार्श्वमिति । बलभद्रस्तु तयोक्त्वा श्रेणीप्रातिभाव्येन तावदतिष्ठद्यावत्तत्पुरवृद्धलेखलब्धवृत्तान्तो गृहगुप्तः खेटकपुरमागत्य सह जामात्रा दुहितरमतिप्रीतिः प्रत्यनैषीत् । तथा दृष्ट्वा रत्नवती कनकवतीति भावयतस्तस्यैव बलभद्रस्यार्[illegible] । वल्लभा जाता । तद्ब्रवीमि कामो नाम संकल्प इति । [illegible]त् ।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमप्राक्षीत् । सोऽहमब्रवम् । स शूरसेनेषु मथुरा नाम नगरी । तत्र कश्चित्कुलपुत्रः कलासु [illegible] यथार्ह[illegible]ातिसक्तो मित्रार्थं कलत्रार्थं च स्वभुजमात्रनिर्वृत्त लुब्धाश्च कलहकण्टक इति कर्कशैरभिख्यापिताख्यः प्रत्यवात्सीत् । निशास्वपि कस्यचिदागन्तोश्चित्रकरस्य हस्ते चित्रपटं ददर्श । तत्र कर्णसभमाकर्षन्तीं युवतिरालोचनमात्रेणैव कलहकण्टकस्य कामातुरं [illegible]सा संनिगृहीता । च तमब्रवीत् । भद्र विरुद्धमिवैतत्प्रतिभाति । [illegible]प च नूपुरश्चरणा-

4. सपरुषं C.— 5. मस्यावृत्तान्तकदेशम् M.—6.C. W.—7. सत्रासा A. B. W.— 9. अतर्जयत् C.—अभर्त्संयत W.—रत्नवती जां सा भयापदेशात् W.— 11 A.— 10. C. omits एवं.—निधिपातिदत्तकन्या B C. omits मम.— 16. A. वल्भ्यामेव.—11. प्रत्ता C.— 12. न चेत्प्रतीतिरस्मिन: C. omits जन.— 22, अवातिष्ठत् W.— 18. मधरा W. [illegible]. गृहीता W.

वपुः । आभिजात्यशंसिनी च नम्रता । पाण्डुरा च मुखच्छविः । नातिपरिभोगसुलभा च तनुः । मौढतानुविद्धा च दृष्टिः । न चैषा प्रोषितभर्तृका प्रवासचिह्नस्य वेण्यादेरदर्शनात् । लक्ष्म चैतद्दक्षिणपार्श्ववर्ति । तदियं वृद्धस्य कस्यचिद्वणिजो नातिपुंस्त्वस्य यथार्हसंभोगालाभपीडिता गृहिणी त्वयातिकौशलाद्यथादृष्टमालिखिता भवितुमर्हतीति । स तमतिप्रशस्याशंसत् । सत्यमिदम् । अवन्तिपुर्यामुज्जयिन्यामनन्तकीर्तिनाम्नः सार्थवाहस्य भार्या यथार्थनामा नितम्बवती नाम । एषा सौन्दर्यविस्मितेन मयैवमालिखितेति । स तदेवोन्मनायमानस्तद्दर्शनाय परिवव्राजोज्जयिनीम् । भार्गवो नाम भूत्वा भिक्षामिषेण तद्गृहं प्रविश्य तां ददर्श । दृष्ट्वा चात्यारूढमन्मथो निर्गत्य पौरमुख्येभ्यः श्मशानरक्षामयाचतालभत च । तत्र लब्धैश्च शवावगुण्ठनपटादिभिः कामप्यर्हन्तिकां नाम श्रमणिकामुपासांचक्रे । तन्मुखेन च नितम्बवतीमुपनिमन्त्रयामास ।
र
सा चैनां निर्भर्त्सयन्ती प्रत्याचचक्षे । श्रमणिकामुखाच्च दुष्करशील-
मा
भ्रंशां कुलस्त्रियमुपलभ्य रहसि दूतिकामित्याशिक्षयत् । भूयोऽप्युपतिष्ट
कम्प
र्थवाहभार्याम् । ब्रूहि चोपह्वरे संसारदोषदर्शनात्समाधिमास्थाय
तु तद
नमाणो मादृशो जनः कुलवधूनां शीलपातने घटत इति क्व
व्यवधाय
एतदपि त्वामत्युदारया समृद्ध्या रूपेणातिमानुषेण प्रथमेन
नीत्वैतदनपे
त्वां किमितरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षिता ।
मित्रोपाचरत्
तत्रैवमदुष्टभावतया । त्वामिदानीमुत्पन्नापत्यां द्रष्टु-
कार्याणि चाहीन
भर्ता भवत्याः केनचिद्ग्रहेणाधिष्टितः पाण्डुरोगदुर्बलो
करोत् । तद्गुण
स्थितोऽभूत् । न च शक्यमस्य विघ्नमप्रतिकृत्याप-

2. स्नातः C. W.—। अतः प्रसीद वृक्षवाटिकामेकाकिनी प्रविश्य
4. अतिष्ठत A.— 5. W. मन्त्रवादिनः स्वच्छन्दमेव हस्ते चरणमर्पयित्वा
C. W. omit second च.— पिता नाम भूत्वा भर्तारमुरसि प्रहर्तुमर्हसि ।
च.—10. A.—omits अपि
W.—ऽपहृत A.— 12. A. C.— 18. त्वामत्युदारतया A.— 19. त्वयशासि...
omits स्पृष्टं.—भवान् for मम A.— 21. भर्ता तु C. W.— 22. तस्य W.—
16. कुट्टिमे चोनरीय A.

उपर्यसावुत्तमधातुपुष्टिमूर्जितापत्योत्पादनक्षमामासादयिष्यति । अनुवर्तिष्यते देवतामिवानुभवतीम् । नात्र शङ्का कार्येति । सा तथोक्ता व्यक्तमभ्युपैष्यति । नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि । तावतैव त्वयानुगृहीतो भवेयमिति । सा तथैवोपपादितवती । सोतिप्रीतस्तस्यामेव क्षपायां वृक्षवाटिकां गतो नितम्बवतीं निर्ग्रन्थिकाप्रयत्नोपनीतां पादे परामृशन्निव हैमनूपुरमेकमाकृष्य छुरिकयोरुमूले किंचिदुल्लिख्य द्रुततरमपासरत् । सा तु सान्द्रत्रासा स्वमेव दुर्नयं गर्हमाणा जिघांसन्तीव श्रमणिकां तद्व्रणं भवनदीर्घिकायां प्रक्षाल्य पटेन च बद्ध्वामयापदेशादपरं चापनीय नूपुरं शयनपरा त्रिचतुराण्यहान्येकान्त एव निन्ये । स तु धूर्तो विक्रेष्य इति तेन नूपुरेण तमनन्तकीर्तिमुपाससाद । स दृष्ट्वा मम गृहिण्या एवैष नूपुरः । कथमयमुपलब्धस्त्वयेति तमनुवाणं निर्बन्धेन पप्रच्छ । स तु वणिग्ग्रामस्याग्रे वक्ष्यामीति स्थितोभूत् । पुनरसौ स्वगृहिण्यै नूपुरयुगलं प्रेषयेति संदिदेश । सा च सलज्जंससाध्वसं चाद्य रात्रौ विश्रामप्रविष्टायां वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः । सोद्याप्यन्विष्टो न दृष्टः । स पुनरयं द्वितीय इत्यपरं प्राहिणोत् । अनया च वार्तयामुं पुरस्कृत्य स वणिग्जनसमाजमाजगाम । स चानुयुक्तो धूर्तः सविनयमावेदयत् । विदितमेव खलु वो यथाहं युष्मदाज्ञया पितृवनमभिरक्ष्य तदुपजीवी प्रतिवसामि । लुब्धाश्च कदाचिन्मद्दर्शनभीरवो निशि दहेयुरपि गात्राणीति निशास्वपि श्मशानमधिशये । अपरेद्युर्दग्धादग्धं मृतकं चितायाः प्रसभमाकर्षन्तीं श्यामाकारां नारीमपश्यम् । अर्थलोभात्तु भयं निगृह्य सा संनिगृहीता । शस्त्रिकया यदृच्छयोरुमूले किंचिदुल्लिखितम् । एष च नूपुरश्चरणा-

---

2. देवीं C. W.— 3. नक्तं च A.— 4. त्वयाहं C. W.—7. सत्रासा A. B. C.— 8. स्वस्यैव C.— 9. प्रक्षाल्य दत्वा पटबन्धनं सा भयापदेशात् W.— 11. एष एव A.— 14. विश्रम्भ° C. also M.—15. C. omits मम.— 16. A. omits सोद्याप्यन्विष्टो न दृष्टः.— 17. स वणिग्जनः C. omits जन.— 22, अर्थलोभात्तु निगृह्य ससाध्वसं W.—निगृहीता C. गृहीता W.

दर्शितः । तावत्येव द्रुतगतिः सा पलायिष्ट । सोयमस्यागमः । परं भवन्तः प्रमाणमिति । विमर्शे च तस्याः शाकिनीत्वमैकमत्येन पौराणामभिमतमासीत् । भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेनोद्बध्य मर्तुकामा तेन धूर्तेन नक्तमगृह्यत । अनुनीता च । सुन्दरि त्वदाकारोन्मादितेन मया त्वदावर्जने बहूनुपायान्भिक्षुकीमुखेनोपन्यस्य तेष्वसिद्धेषु पुनरयमुपायो यावज्जीवमसाधारणीकृत्य रन्तुमाचरितः । तत्प्रसीदानन्यशरणायास्मै दासजनायेति मुहुर्मुहुश्चरणयोर्निपत्य प्रयुज्य सान्त्वनशतानि तामगत्यन्तरामात्मवश्यामकरोत् । तदिदमुक्तं दुष्करसाधनं प्रज्ञेति ।

स चेदमाकर्ण्य ब्रह्मराक्षसो मामपूजयत् । अस्मिन्नेव क्षणे नातिप्रौढपुंनागमुकुलस्थूलानि मुक्ताफलानि सह सलिलबिन्दुभिरम्बरतलादपतन् । अहं तु किंस्विदमित्युच्चक्षुरालोकयन्कमपि राक्षसं कांचिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम् । कथमयमपहरत्यकामामपि स्त्रियमनाचारो नैर्ऋत इति गगनगमनमन्दशक्तिरशस्त्रश्च समतप्ये । स तं मत्संबन्धी ब्रह्मराक्षसस्तिष्ठ तिष्ठ पाप क्वापहरसीति निर्भर्त्सयन्नुत्थाय राक्षसेन समसृज्यत । तां तु रोषादनपेक्षापविद्धाममरवृक्षमञ्जरीमिवान्तरिक्षादापतन्तीमुन्मुखप्रसारितोभयकरः कराभ्यां सदयमग्रहीषम् । उपगृह्य च वेपमानां संमीलिताक्षीं मदङ्गस्पर्शसुखोद्भिन्नरोमाञ्चां तादृशीमेव तामनवतारयन्नेवातिष्ठम् । तावत्तावुभावपि शैलशृङ्गभङ्गैः पादपैश्च रभसोन्मूलितैर्मुष्टिपादप्रहारैश्च परस्परमक्षपयेताम् । पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेवरोप्य सस्पृहं निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यकां कन्दुकावतीमलक्षयम् । सापि मया समाश्वास्यमाना

2. डाकिनीत्वं C.— 3. A. omits च, but marks a gap of one akshara.—अथ भर्त्रा C.— 4. जारेण A.— 6. असिद्ध A.—अभ्युपायो C.— 10. W. omits च. C. writes समाकर्ण्य (sic).— 12. आलोकय C. आलोकयम्.— 13. अथ कथमपहरत्ययं C. W. omits अयं.—निष्कामां W.— 14. नैर्ऋतिकः A.— 17. करं कराभ्यां A. करकराभ्यां B. C. omits कराभ्यां.— 20. °प्रहारैश्च जानुभिश्च C.— 22. B. C. omit लव.— 23. कुमारराजकन्यां C.

तिर्यङ्नामामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत् । अवादीच्च । नाथ त्वद्दर्शनादुपोढरागा तस्मिन्कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासितास्मि । त्वं किल समुद्रमध्ये मज्जितः पापेन भ्रात्रा भीमधन्वनेति श्रुत्वा सखीजनं परिजनं च वञ्चयित्वा जीवितं जिहासुरेकाकिनी क्रीडावनमुपागमम् । तत्र च मामवक्रमत कामरूप एष राक्षसाधमः । सोऽयं मया भीतयावधूतप्रार्थनः स्फुरन्तीं मां निगृह्याभ्यधावत् । अत्रैवमवस्थितोऽभूत् । अहं च दैवात्तवैव जीवितेशस्य हस्ते पतिता । भद्रं तवेति श्रुत्वा चानया सहावरुह्य नावमभ्यारोहम् । मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत । अवरुह्याथ वयमश्रमेण । तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्विकलः स्वयं सकलत्र एव निष्कलङ्के गङ्गारोधस्यनशनेनोपरन्तुं प्रतिष्ठते । सह तेन मर्तुमिच्छत्यनन्यनाथोऽनुरक्तः पौरवृद्धलोक इत्यश्रुमुखीनां प्रजानामाक्रन्दमशृणुम । अथाहमस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान् । प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण । तत्पुत्रो मदनुजीवी जातः । मदागतेन चानुना प्राणवदुज्झिता चन्द्रसेना कोशदासमेवाभजत् । ततश्च सिंहवर्मसाहाय्यार्थमत्रागत्य भर्तुस्तव दर्शनोत्सवसुखमनुभवामीति ।

श्रुत्वा चित्रेयं दैवगतिरवसरेषु पुष्कलः पुरुषकार इति भूयः स्मिताभिषिक्तदन्तच्छदे मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास देवो राजवाहनः । स किल करकमलेन किंचित्संवृताननो ललितवल्लभारभसदत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णमात्मचरितमाचचक्षे ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं
नाम षष्ठ उच्छ्वासः ।

---

2. तस्मिन्नेव C.—C. omits पुनर्.—4. पातकेन C.—C. omits परिजनं च.—5. जीवितं च B. पुनरेकाकिनी C.—उपागमम् C. W.—6. एव A.—7. [illegible] C.—8. °रोपस्तस्मि C.—त्वया C. W.—9. प्रत्युपातिष्ठत् C.—11. अनपत्यः C.—13. B. omits लोक.—पौरेषु B.—15. °पुत्रश्च C.—16. त्यक्ता प्राणवदुज्झिता चंद्रसेना A. C.—21. A. omits व्यसन.

## ॥ अथ सप्तम उच्छ्वासः ॥

राजाधिराजनन्दन नगरन्ध्रगतस्य ते गतिं शास्यनहं च गतस्तदा कलिङ्गान् । कलिङ्गनगरस्य च नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्यास्तीर्णसरसकिसलयसंस्तरे तले निपद्य निद्रालीढदृष्टिरशयिषि । गलति च कालरात्रिशिखण्डजालकान्धकारे चरितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने निलान्तशीते निशीथे घनतरसालशाखान्तरालनिर्ह्रादि नेत्रनिसिनीं निद्रां निगृह्य त्कर्णदेशं गतं कथं खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन एष रागेणानर्गलेनार्दित इत्थं खिलीकृतः । क्रियेतास्याणकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्ध्यन्तराय इति किंकरस्य किंकर्यथ्यातिकातरं रटितं । तदाकर्ण्य क एष सिद्धः का च सिद्धिः किं चानेन किंकरेण करिष्यत इति दिदृक्षाक्रान्तहृदयः किंकरगतया दिशा किंचिदन्तरं गतस्तरलतरनरास्थिशकलरचितालंकारकान्तकायं दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं तरलतडिल्लताकारजटाधरं हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे क्षणक्षणगृहीतनानेन्धनग्रासचञ्चलर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीनि निरन्तरचटचटायितानि किरन्तं कंचिदद्राक्षं । तस्याग्रे स कृताञ्जलिः किंकरः किं करणीयं दीयतां निदेश इत्यातिष्ठत् । आदिष्टश्च तेनायमतिनिकृष्टाशयेन । गच्छ कलिङ्गराजस्य कर्दनस्य कन्यकां कनकलेखां कन्यागृहादिहानयेति । स च तथाकार्षीत् । ततश्च तां त्रासेनालघीयसा चास्रजर्जरेण च कण्ठेन रणरणिकागृहीतेन च हृदयेन हा तात हा जननीति क्रन्दन्तीं कीर्णग्लानशेखरस्रजि शीर्णनद्धे शिरसिजानां संचये निगृ-

1. नगरन्ध्रं B.—B. omits च.—2. W. omits च.—3. °किसलये संस्तरे तले A. C. omits संस्तरे.—5. निशान्तशीते A.—6. घनतरशाखिशाखा° C. W.—°अंतराले C. also M.—°निन्हादि A. °निर्हादिनि B. C.—7. दग्धनरेंद्रेण A. C.—8.—रागेणानेनार्दित B. रागेणांतर्गतेनानर्गलेन C.—9. अस्थानकनरेंद्रस्य C.—°सिद्धांताय A.–13. W. omits तरल.–15. °आदान् B.—16. C. omits त.– किंकर· किंकरि ष B. C.–17. C. omits किं करणीयं–अयं तेनातिकृष्टाशयेन W.–18. कन्यां W.—19. एनां W.—अलघीयस्या चाश्रुजर्जरेण A. अलघीयसा साश्रु—20. रणरणक° C.

ञ्यासिना शिलाशितेन शिरश्चिकर्तिषयाचेष्टत । झटिति चाच्छिद्य तस्य हस्तात्तां शस्त्रिकां तया निकृत्य तच्छिरः सजटाजालं निकटस्थस्य कस्यचिज्जीर्णसालस्य रन्ध्रे न्यधिषि । तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिरकथयत् । आर्य कदर्यस्यास्य कदर्थनान्न कदाचिन्निद्रायाति नेत्रे । तर्जयति त्रासयति चाकृत्ये चाज्ञां ददाति । तदत्र कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः शेते शीतेतरदीधितिदेहजस्य नगरे । तदित्थं दयानिधेरनन्ततेजसस्तेयं जनः कांचिदाज्ञां चिकीर्षति । आदिश । अलं कालहरणेनेत्यंनसीत् । आदिष्टं च तं सखे सैषा सज्जनाचरिता सरणिर्यदणीयसि कारणेऽनणीयानादरः संदृश्यते । न चेदिदं नेच्छसि । सेयं संनताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणात्यर्थं क्लेशिता । नयैनां निजानिलयं नान्यदितः किंचिदस्ति चिन्ताराधनं न इति । अथ तदाकर्ण्य कर्णशेखरनीलनीरजायितां धीरेतरतारकां दृशं तिर्यक्किंचिदञ्चितां संचारयन्ती सलिलचरकेतनशरासनानेतां चिल्लिकालतां ललाटरङ्गस्थलीलास्यनर्तकीं लीलालसं लासयन्ती, कण्टकितरक्तगण्डलेखा रागलज्जान्तरालचारिणी चरणाग्रेण धरणीतलं तिरश्चीननखार्चिश्चन्द्रिकेण साचीकृताननसरसिजं लिखन्ती, दन्तच्छदकिसलयलङ्घिना हर्षास्रसलिलधाराशीकरकणजालसंक्लेदितस्य स्तनतटचन्दनस्यार्द्रतां निरस्यतास्यान्तरालनासान्तरनिःसृतेन तनीयसानिलेन हृदयलक्ष्यदलनदक्षरतिसहचरसायकस्यदायितेन तरङ्गितदशनचन्द्रिकाणि कानिचिदेतान्यक्षराणि कलकण्ठीकलान्यसृजत् । आर्य केन कारणेनेनं दासजनं कालहस्तादाच्छिद्यानन्तरं रागानिलचलितरणरणिकालरङ्गिण्यनङ्गसागरे किरसि । यथा ते चरणसरसिजरजःकणिका तथाहं

1. शितेन for शिलाशितेन B. C. शिलासितेन A. So also Pa . ( शिलावदसितः श्यामः)—2. तस्य छिरः A. तस्य तच्छिरः W.—3. न्यदधां A. B. न्यदाधिषि (*sic*) C.—7. नगरं A. C. W.—11. B. omits सत्यनेन.—B. omits निज.—12. किंचित्किंचित्° A.—13. °निलीननील° Pa[d].—धीरेतरतरलतारकां A. धीरतरल Pa .—21. °स्य दयितेन W. M.

चिन्तनीया । यद्यस्ति दया तत्र जनेनन्यसाधारणः करणीयः स एष चरणाराधनक्रियायाम् । यदि च कन्यागाराध्यासने रहस्यक्षरणादनर्थ आशङ्क्यते नैतदस्ति । रक्ततरा हि नस्तत्र सख्यश्चेट्यश्च । यथा न कश्चिदेतज्ज्ञास्यति तथा यतिष्य इति । स चाहं देहजेनाकर्णाकृष्टसायकासनेन चेतस्यनिर्दयं हतस्तत्कटाक्षकालायसनिगडगाढसंयतः किंकराननिहितदृष्टिरगादिषं । यथेयं रथचरणजघना कथयति तथा चेन्नाचरेयं नयेत नक्रकेतनः क्षणेनैकेनाकीर्तनीयां दशां । जनं चैनं सहानया नय कन्यागृहं हरिणनयनयेति । नीतश्चाहं निशाचरेण शारदजलधरकान्ति कन्यकानिकेतनं तत्र च काचित्कालकलां चन्द्राननानिदेशाच्चन्द्रशालैकदेशे तद्दर्शनचलितधृतिरतिष्ठं । सा च च्छन्दतः शयानाः करतलालससंघट्टनापनीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत् । अथागत्य ताश्चरणानिहिताशिरसः क्षरदस्रकरालितेक्षणा निजशेखरकेसराग्रसंलग्नषट्चरणगणरणितसंशयितकलगिरः शनैरकथयन् । नाथ यदत्यादित्यतेजसस्त एषा नयनलक्ष्यतां गता ततः कृतान्तेन न गृहीता । दत्ता चेयं चित्तजेन गरीयसा साक्षीकृत्य रागानलं । तदनेनाश्चर्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालंक्रियतां हृदयं । तदस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्येति । ततः सखीजनेनातिदाक्षिण्येन दृढतरीकृतस्नेहनिगलस्तया संनताङ्ग्या संगत्यारंसि ।

अथ कदाचिदायासितजायारहितचेतसि लालसालिलङ्घनग्लानघनकेसरे राजदरण्यस्थलीललाटलीलायिततिलके ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिकारकाञ्चनच्छत्रे दक्षिणदहनसारथिरयाहतसहकाराङ्कलग्नचञ्चलचञ्चरीककलिके कालाण्डजकण्ठरागरक्तरक्ताधरारतिरणाय संनाहशालिनि शालीनकन्यकान्तःकरणसंक्रान्तकान्तरागलङ्घितलज्जे दर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्तलीले काले

2. रहस्यारक्षणात् A.— 3. C. omits नस्तत्र.— 11. स्वच्छन्दतः W.—19. °निगडः W.— 22. गलितनि° A. B.

कलिङ्गराजः सह निजाङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश त्रीणि च दिनानि दिनकरकिरणजालालङ्घनीये रणदलिसंघलङ्घितनतलताग्रकिसलयालीढसैकततटे तरलतरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीडारसजातासक्तिरासीत् । अथ संततगीतसंगीतसंगताङ्गनासहस्रशृङ्गारहेलानिरर्गलानङ्गसंघर्षहर्षितश्च रागतृष्णैकतन्त्रस्तत्र रन्ध्रेन्ध्रनाथेन जयसिंहेन सलिलतरणसाधनानीतेनानीकेनानेकसंख्येन द्रागागत्यागृह्यत सकलत्रः । सा चानीयत त्रासचञ्चलाक्षी दयिता नः सह सखीजनेन कनकलेखा । तदाहं दाहेनानङ्गदहनजनितेनान्तरिताहारचिन्तश्चिन्तयन्दयितां गलितगात्रकान्तिरित्यतर्कयं । गता सा कलिङ्गराजतनया सह जनयित्रा जनन्या चारिहस्तं । गतधैर्यश्च तां स राजा नियतं संजिघृक्षेत् । तदसहा च सा सती गररसादिना सद्यः संतिष्ठेत । तस्यां च तादृशीं दशां गतायां जनस्यास्यानन्यजेन हन्येत शरीरधारणाशा । का स्याद्गतिरिति ।

अत्रान्तरेन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत । तेन चेयं कथा कथिता । यथा किल जयसिंहेन नैकनिकारदत्तसंघर्षेण जिघांसितः स कर्दनः कनकलेखाकारदर्शनैधितेन रागेणारक्ष्यत । सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरेन्द्रस्य नरान्तरस्य च । आयस्यति च नरेन्द्रसार्थसंग्रहणेन नरेन्द्रस्तन्निराकरिष्यन्न चास्ति सिद्धिरिति । तेन चाहं दर्शिताशः शंकरनृत्तदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्थाचीरसंचयान्तरितसकलगात्रः कांश्चिच्छिष्यानग्रहीषं । तांश्च नानाश्चर्यक्रियातिसंहिताज्जनादाकृष्टान्नचेलादित्यागान्नित्यहृष्टानकार्षं । अयासिषं च दिनैः कैश्चिदन्ध्रनगरं । तस्य नात्यासन्ने सलिलराशिसदृशस्य कलहंसगणदलित-

3. °चलच्चता° A.— 10. A. omits राज.—जनयित्रा जनन्या सह C. जनित्रा जनयित्र्या च सह W.— 11. निरस्तधैर्यः W.— 15. दैक्षत A. B.— 16. अनेक° C. W.

नलिनदलसंहतिगलितकिञ्जल्कशकलशारस्य सारसश्रेणिशेखरस्य सरस्तीरकानने कृतनिकेतनः स्थितः । शिष्यजनकथितचित्रचेटाकूटसकलनागरजनातिसंधानदक्षः सन्दिशि दिशीत्यकीर्त्यै जनेन । य एष जरदरण्यसरस्तटे सलिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च छन्दांसि रसनाग्रे संनिहितानि । अन्यानि च शास्त्राणि । येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति । असत्येनास्य नास्यं संसृज्यते । सशरीर एष दयाराशिः । एतत्संग्रहेणाचिरं चरितार्था दीक्षा । तच्चरणरजःकणैः कैश्चन शिरसि कीर्णैरनेकस्यानेक आतङ्कश्चिकित्सनैरसंहार्यः संहृतः । तदङ्घ्रिक्षालनसलिलसेकनिष्कलङ्कशिरसां नश्यन्ति क्षणेनैकेनाखिलनरेन्द्रयत्नलङ्घिनश्चण्डतरग्रहाः । न तस्य शक्यं शक्तिरियत्ताज्ञानं । न चास्याहंकारकणिकेति । सा चेयं कथा नैकजनास्यसंचारिणी तस्य कनकलेखाधिटितधनदाशाकरनिराक्रियासक्तचेतसः क्षत्रियस्याकर्णणाचाशकत् । स चाहरहरागत्यादरेणातिगरीयसार्चयच्चर्यैश्च शिष्यान्संगृह्णन्नधिगतक्षणः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट । ध्यानधीरः स्थानदर्शितज्ञानसंनिधिश्चैनं निरीक्ष्य निचाय्याकथयं । तात स्थान एष हि यत्नः । तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगतिः क्षीरसागररशनालंकृताया गङ्गादिनदीसहस्रहारयष्टिराजिताया धराङ्गनायाश्चासादनाय साधनं । न च स यक्षस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्या लीलाञ्चितनीलनीरजदर्शनाया दर्शनं सहते । सह्यन्तां तत्र त्रीण्यहानि यैरहं यतिष्येर्थस्यास्य साधनायेति ।

1. नलिनगलत [सं] हति° A. B. omits नलिन.— 2. निकेतनास्थितिः शिष्यगण°. A.— 4. B. omits सलिल, writing °तटशायी. स्थण्डिलशायी. W.—अस्य A. C.— रहस्यानि A. W.— 7. अस्यास्यं न C.—सदारीरश्च W.— 8. यच्चरण° C.— 9. अनेकस्थानेऽनेक C.— 10. C. omits एकेन.— 11. चंडग्रहाः C. the reading of A. and B. is corrupt.— 12. अनेक° W.— 14. छंदयन् A. च्छदयन् B.—अर्थेन C.— 16. निरीक्ष्य निक्षिप्य A. C. निरीक्ष्य निचाय्य W.— 19. W. omits न.— 20. A. omits नील.— 21. तदत्र सह्यंतां C. W.— सहायैरहं A.

तथादिष्टे हृष्टतरे गते क्षितीशे निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारनिकरनिगीर्णदशदिशि निद्रानिगलितनिखिलजनदृशि निर्गत्य जलतलनिलीनगाहनीयं नीरन्ध्रं कृच्छ्राच्छिद्रीकृतान्तरालं तदेकतः सरस्तटं तीर्थसंनिकृष्टं केनचित्खननसाधनेनाकार्षम् । घनशिलेष्टिकाच्छन्नच्छिद्राननं तत्सरस्तीरदेशं जनैरशङ्कनीयं निश्चित्य दिनादिस्नाननिर्णिक्तगात्रश्च नक्षत्रसंतानहारिहारयष्ट्यग्रग्रथितरत्नं क्षणदान्धकारगन्धहस्तिदारणैककेसरिणं कनकशैलशृङ्गरङ्गलास्यलीलानटं गगनसागरघनतरङ्गराजिलङ्घनैकचक्रं कार्याकार्यसाक्षिणं सहस्रार्चिषं सहस्राक्षदिगङ्गनारक्तचन्दनाङ्गरागरागायितकिरणजालं रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं चाध्यशिश्रियं ।

याते च दिनत्रयेस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजस्यचलराजकन्यकाकदर्थनयान्तरिक्षाख्येण शंकरशरीरेण संसृष्टायाः संध्याङ्गनाया रक्तचन्दनचर्चितैकस्तनकलशदर्शनीये दिनाधिनाथे जनाधिनाथः स आगत्य जनस्यास्य धरणिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत् । आदिष्टश्च । दिष्ट्या दृष्टेष्टसिद्धिः । इह जगति न हि निरीहं देहिनं श्रियः श्रयन्ते । श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि । यतस्ते साधीयसा सच्चरितेनानाकलितकलङ्केनार्चितेनात्यादरनिचितेनाकृष्टचेतसा जनेनानेन सर इदं तथा संस्कृतं यथेह तेद्य सिद्धिः स्यात् । तदेतस्या निशि गलदर्धायां गाहनीयं । गाहनानन्तरं च सलिलतले सततगतीनन्तश्चारिणः संनिगृह्य यथाशक्ति शय्या कार्या । ततश्च तटस्खलितजलस्थगितजलजखण्डचलितदण्डकण्टकाग्रदलितदेहराजहंसत्रासजर्जररसितदत्तकर्णस्य जनस्य क्षणाकर्णनीयं जनिष्यते

1. तथादिष्टे यथादिष्टे च A.—हृष्टं W.—C. omits गते. W. puts it after क्षितीशे.—निशानिशि A. W.— 3. नीरंध्रं कृत्वा B.— 5. W. omits सरः.— 7. रंगस्थली C.— 11. जाते A.— 12. संहृष्टायाः C.— 16. हि न W.—निरीहदेहिनं C. W.—संश्रयंते B. W.—श्रेयांसि च. B. adds किल.— 23. संदत्तकर्णस्य B.—W. क्षणादाकर्णनीयं W.

जलसंघातस्य किंचिदारटितं । शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः किंचिदारक्तदृष्टिर्येनाकारेण निर्यास्यसि निचाय्य तस्य निखिलजननेत्रानन्दकरस्य न स यक्षः शक्ष्यत्यग्रे स्थितये । स्थिरतरनिहितस्नेहशृङ्खलानिगडितं च कन्यकारत्नं क्षणेनैकेनासहनीयदर्शनान्तरायं स्यात् । अस्याश्च धराङ्गनाया नात्यादरनिराकृतारिचक्रं चक्रं करतलगतं चिन्तनीयं । न तत्र संशयः । तच्चेदिच्छसि नैकशास्त्रज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिगणैर्विचार्य जालिकशतं चानाय्यानन्तरं नरशतैर्यथेष्टदृष्टान्तरालं सरः क्रियेत । रक्षा चात्र तीरात्त्रिंशद्दण्डान्तरे सैनिकजनेन सादरं रचनीया । कस्तज्जानाति यच्छिद्रेणारयश्चिकीर्षन्तीति । तत्तस्य हृदयहारि जातं । तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनासहैरिच्छां च राज्ञः कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थ एष न निषिद्धः । तथास्थितश्च तदासादनदृढतराशयः स आख्यायत । राजन्नत्र जनान्ते चिरं स्थितं । न चैकत्र चिरं स्थानं नः शस्तं । कृतकृत्यश्च न इह द्रष्टासि । यस्य राष्ट्र आतिथेयाद्यासादितं तस्य ते किंचिदनाचर्य कार्यं गतिरार्यगर्ह्येति । अत्रैतच्चिरस्थानस्य कारणम् । तच्चाद्य सिद्धम् । गच्छ गृहान् । यथार्हजलेन हृद्यगन्धेन स्नातः सितस्रगङ्गरागः शक्तिसदृशेन दानेनाराधितधरणितलतैतिलगणास्तिलस्नेहसिक्तयष्ट्यग्रग्रथितवर्तिकाग्निशिखासहस्रग्रस्तनैशान्धकारराशिरागत्यार्थसिद्धये यतेथा इति । स किल कृतज्ञतां दर्शयन्नसिद्धिरेषा सिद्धिर्यदसंनिधिरिहार्याणां । कष्टा चेयं निःसंगता या निरागसं दासजनं त्याजयति न च निषेधनीया गरीयसा गिर इति स्नानाय गृहानयासीत् । अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सनीपच्छिद्रदत्तकर्णः स्थितः । स्थिते

1. क्लान्तगात्रः A. B.—4. °निगलितं A. B.—6. अनेकशास्त्र° W.—7. निधार्यानंतरं नरशतयथेष्ट° (*sic*) A. निर्धायगतरं (*sic*) जालिकसतं चानाय्य अं (*sic*) नरशतैः B.—8. B. W. omit अत्र.—A. omits तीरात्.—11. नितांतानिश्चितां B.—14. यस्य ते B. C. D. W.—15. ग्रासाद्यासादितं C. W. also M. B.—18. धरणितैलगणः A.—22 A. omits निर्गत्य.

चार्धरात्रे कृतयथादिष्टक्रियः स्थानस्थानरचितरक्षः स राजा जालिकजनानानीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतश्च कीर्णकेशं संहतकर्णनासं सरस्तलं हास्तिनं नक्रलीलया नीरनिलीनयायी । तं तथाशयानं कन्थया कंधरायां न्यग्रहीषम् । खरतरकालदण्डघट्टनातिचण्डैश्च करचरणतलाघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहात्स चेष्टां । ततश्चाकृष्य तच्छरीरं तीरच्छिद्रे निधाय नीरान्निरयासिषं । सद्यः संगतानां च सैनिकाना तदल्पचिन्नीयताकारान्तरग्रहणं । गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजरथ्यया यातस्तां निशां नयनरसनिरस्तनिद्रारतिरत्यनैषं । नीते च जनाक्षिलक्ष्यतां लाक्षारसादिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजासनाध्यासी यथासदृशाचारदर्शिनः शङ्कायन्त्रिताङ्गान्संनिधिनिषादिनः सहायानगादिषं । दृश्यतां शक्तिरार्षी यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसांनिध्यशालिनि सहर्षालिनि सरसि सरसिजदलसंनिकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरसिद्धिरासीत् । अद्य किल सकलनास्तिकानां जायेत लज्जानतं शिरः । तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनांत्रिदशेशानां स्थानान्यत्यादररचितनृत्यगीतार्चनाञ्चितानि क्रियन्तां । ह्रियन्तां गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानीति । आश्चर्यरसातिरेकहृष्टदृष्टयश्च ते जय जय जगदीश दश दिशः स्थगयन्निजतेजसादिराजयशांसीत्यसकृदाशास्याचरन्यथादिष्टाः क्रियाः । स चाहं दयितायाः सखीं

3. गतश्च A. C. W. गतंश्च (*sic*) B.—°कर्णनासिकं B. W. C. corrects °नासं to नासिकं.—हस्तनक्रलीलया A.—4. नीरनीलया B. C. नीरनिलीनया W.—W. omits कन्थया.—9. °दत्तान्तरया B. C. W.—10. निशां तया सस° (*sic*). A. निशा नयरस B.—17. W. omits किल.—18. °आदर° B. C. W.—19. °गीताचनानि (*sic*) B. °गीताथाराधनानि C. W.—21. A's reading is corrupt. B. omits one जय.—निजेन B. ते जय जगदीश स्वतेजसातिशय्य दशदिशः स्थगयन्निजेन यशसादिराजयशांसि.

हृदयस्थानीयां शशाङ्कसेनां कन्यां कदाचित्कार्यान्तरागतां रहस्यात्रक्षिपि । कच्चिदयं जनः कदाचिदासीदृष्ट इति । अथ सा हर्षकाष्ठांगतेन हृदयेनेपदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती हसन्ती लीलाञ्चितकरशाखान्तरितदन्तच्छदकिसलया हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलिर्नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किंचिदेतादृशं । तत्कथं चैतत्कथयेति स्नेहनिर्यन्त्रणं शनैरगादीत् । अहं चैतदस्यै कात्स्न्येनाख्याय तदाननसंक्रान्तेन संदेशेन संजनय्य सहचर्यां निरतिशयं हृदयाह्लादनं ततश्चैतया दयितया निरर्गली कृतातिसत्कृतकलिङ्गनाथन्यायदत्तया संगत्यान्ध्रकलिङ्गराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकायालघीयसा साधनेनागत्यात्र ते सखिगणसंगतस्य यादृच्छिकदर्शनानन्दराशिलङ्घितचेता जात इति ।

तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य चित्रमिदं महामुनेर्वृत्तम् । अत्रैव खलु फलितमतिकष्टं तपः । तिष्ठतु भवन्नर्म । प्रकर्षस्पृशोः प्रशासत्त्वयोर्दृष्टमिह स्वरूपमित्यभिधाय पुनरवतरतु भवानिति बहुश्रुते विश्रुते विकचराजीवसदृशं चक्षुश्चिक्षेप क्षितीशपुत्रः ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं
नाम सप्तम उच्छ्वासः ।

---

6. अवादीत् B.— 7. B. C. W. omit एतत्. 9. अन्ध्रकलिङ्गराज्यं कलिङ्गनाथे न्यस्तं—15. तावन्नर्म W. P.

## । अथ अष्टम उच्छ्वासः ।

सोप्याचचक्षे। देव मयापि परिभ्रमता विन्ध्याटव्यां कोपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः क्वचित्कूपाभ्याशेष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्। महाभाग क्लिष्टस्य मे क्रियतामार्य साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोपि निष्कलो ममैकशरणभूतः पतितः। तमलमस्मि नाहमुद्धर्तुमिति। अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य तं च वालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्चपञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णस्तं जरन्तमब्रवम्। तात क एष वालकः। को वा भवान्। कथं चेयमापदापन्नेति। सोश्रुगद्गदमगदत्। श्रूयतां महाभाग। विदर्भो नाम जनपदः। तस्मिन्भोजवंशभूषणमंशावतार इव धर्मस्यातिसत्त्वः सत्यवादी वदान्यः सुविनीतो विनेता प्रजानां रञ्जितभृत्यः कीर्तिमानुदग्रो मूर्तिबुद्धिभ्यामुत्थानशीलः शास्त्रप्रमाणः शक्यभव्यकल्पारम्भी संभावयिता बुधान्प्रभावयिता सेवकानुन्नावयिता बन्धून्न्यग्भावयिता शत्रूनसंबद्धप्रलापेष्वदत्तकर्णः कदाचिदप्यवितृष्णो गुणेष्वतिनदीष्णः कलासु नेदिष्ठो धर्मार्थसंहितासु स्वल्पेपि सुकृते सुतरां प्रत्युपकर्ता प्रत्यवेक्षिता कोशवाहनयोर्यत्नेन परीक्षिता सर्वाध्यक्षाणामुत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः सद्यः प्रतिकर्ता दैवमानुषीणामापदां षाड्गुण्योपयोगनिपुणो मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य पुण्यश्लोकः पुण्यवर्मा नामासीत्। स पुण्यैः कर्मभिः प्राप्य पुरुषायुषं पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्वगुणैः समृद्धोपि दैवाद्दण्डनीत्यां नात्यादृतोभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य वहुमतः प्रगल्भ-

7. वालकं A.—फलैश्च पञ्चशैः W.—8. लिकुच° B. W.—आपद्य A. उत्पाद्य C. W.—9. वाल: C. W.—10. अवदत् A. B.—11. तस्मिन्नपि A.—13. भूतिवुद्धिभ्यां A. वुद्धिमूर्त्तिभ्यां C.—शास्त्रप्रमाणकः C. W.—15. अनभितृष्णो omits गुणेषु and नेदिष्ठः M.—17. A. omits the words प्रत्यवेक्षिता...प्रतिकर्ता.—21. प्राप्य, W. and M.

वागभाषत । तात सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्रभवति लक्ष्यते । बुद्धिश्च निसर्गपट्वी कलासु नृत्तगीतादिषु चित्रेषु च काव्यविस्तरेषु प्रतिविस्तारा तवेतरेभ्यः प्रतिविशिष्यते । तथाप्यसावप्रतिपन्नात्मसंस्कारमर्थशास्त्रेष्वनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः । बुद्धिशून्यो हि भूभृदत्युच्छ्रितोपि परैरध्यारुह्यमाणमात्मानं न चेतयते । न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते । न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमयोराराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादाश्च लोका लोकादितोमुतश्च स्वामिनमात्मानं च भ्रंशयेयुः । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टेषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय स्वकुलविद्यां दण्डनीतिम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीमिति ।

एतदाकर्ण्य स्थान एव गुरुभिरनुशिष्टं तथा क्रियत इत्यन्तःपुरमविशत् । तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवादित्रादिष्ववाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो बहुभङ्गिविशारदः परमर्माक्षेपणपरः परीहासशीलः परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञापयत् । देव देवानुग्रहेण यदि कश्चिद्राजन्यं भवति विभूतेस्तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः । तथा हि । केचिन्मैत्र्य

---

8. A. omits प्रजानां.— 10. ते लोका. A.— 12. C. omits च.—A. B. omit अप्रतिहतवृत्ति.—19. उपगम्य A.—गीतनृत्य C. W.

किल लब्धैरभ्युदयातिशयैराशामुत्पाद्य मुण्डयित्वा शिरो बद्ध्वा दर्भरज्जुभिरजिनेनाच्छाद्य नवनीतेनोपलिप्यानशनं च शाययित्वा सर्वस्वं स्वीकरिष्यन्ति । तेभ्योपि घोरतराः पाषण्डिनः पुत्रदारशरीर-जीवितान्यपि मोचयन्ति । यदि कश्चित्पटुजातीयो नास्थै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्तमन्ये परिवार्याहुः । एकामपि काकिणीं कार्षापणलक्षमापादयेम शस्त्रादृते सर्वशत्रून्घातयेमैकशरीरमात्रमपि मर्त्यं चक्रवर्तिनं विदधीमहि यद्यस्मद्दिष्टेन मार्गेणाचर्येत इति । स पुनरिमान्प्रत्याह । कोसौ मार्ग इति । पुनरिमे ब्रुवते । ननु चतस्रो राजविद्यास्त्रयी वार्त्तान्वीक्षिकी दण्डनीतिरिति । तासु तिस्रस्त्रयी वार्त्तान्वीक्षिक्यो महत्यो मन्दफलाश्च । तास्तावदासताम् । अधीष्व तावद्दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोक-सहस्रैः संक्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्म-क्षमेति । स तयेत्यधीते शृणोति च । अत्रैव जरां गच्छति । तत्तु किल शास्त्रं सर्वशास्त्रानुबन्धि । सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोधिगं-स्यते । भवतु कालेन बहुनाल्पेन वा तदधिगतिः । अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम् । आत्मकुक्षेरपि कृते तण्डुलैरि-यद्भिरियानोदनः संपद्यते । इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्त-मिति मानोन्मानपूर्वकं देयम् । उत्थितेन च राज्ञा क्षालिता-क्षालितमुखेन मुष्टिमर्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेष्टमे भागे श्रोतव्यम् । शृण्वत एवास्य द्विगुणमपहरन्ति तेप्यक्ष-धूर्ताः । चत्वारिंशच्चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः । द्वितीयेन्योन्यं विवदमानानां प्रजानामाक्रोशाद्द-ह्यमानकर्णः कष्टं जीवति । तत्रापि प्राड्विवाकादयः स्वेच्छया जय-पराजयौ विदधानाः पापेनाकीर्त्या च भर्तारमात्मानं चार्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुं च लभते । भुक्तस्य च यावदप्यन्धःपरिणाम-

3. °शरीरवित्तान्यपि C.—6. एकशरीरिणं Parab— 8. असौ A.—9. दंडनीतिरा-न्वीक्षिकीति A. B.— 10. ता for तावत् A.—11. येयं C.—आर्य° A.— 13.

स्तावदस्य विषभयं न शाम्यत्येव । भुक्त्वा चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेव तिष्ठति । पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति । तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं नियतं मिथः संभूय दोषगुणौ दूतचारवाक्याणि शक्याशक्यतां देशकालकार्यावस्थाः स्वेच्छया विपरिवर्तयन्तः स्वपरमित्रमण्डलान्युपजीवन्ति । बाह्याभ्यतरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति । षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः । स दह्यतां स्वैरविहारकालोयं यस्य तिस्रस्त्रिपादोन्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः । अष्टमे सेनापतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव संध्यां प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः । तन्मुखेनातिनृशंसाः शस्त्राग्निरसप्रणिधयोनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभते । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत् । पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः । सप्तमे मन्त्रग्रहो दूताभिप्रेषणानि च । दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वणिज्यया वर्धयन्तः कार्यमविद्यमानमपि क्लेशेनोत्पाद्यानवरतं भ्रमन्ति । अष्टमे पुरोहितादयोभ्येत्यैनमाहुः । अद्य दृष्टो दुःस्वप्नः । दुःस्थिताश्च ग्रहाः । शकुनानि नातिशुभानि । शान्तयः क्रियन्ताम् । सर्वमस्तु सौवर्णमेव होमसाधनम् । एवं सति कर्म गुणवद्भवति । ब्रह्मकल्पा इमे ब्राह्मणाः । कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति । ते चामी कष्टदारिद्र्यवन्तो बहुपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्रतिग्रहाः । दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवतीति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति । तदेवमहर्निशमविदितसुखलेशमायासबहुलमविरलकदर्थनं च नयतो नयज्ञस्यास्तां चक्रवर्तिता स्वमण्डल-

3. W. omits नियतं.—B. omits मिथः.—7. स दह्यत A. B. सोऽस्यैतावान् W.—15. वीतशुल्कं निराबाधं.—18. च तान्यशुभानि B. तान्यशुभानि C. नात्यशुभानि W.—25. A. omits च.

मात्रमपि दुरारक्षं भवेत् । शास्त्रज्ञसमाज्ञातो हि यद्ददाति यन्मानयति यच्च प्रियं ब्रवीति तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः । यावता च नयेन विना न याति लोकयात्रा स लोकत एव सिद्धः । न तत्र शास्त्रेणार्थः । ननु बालिशोपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते । तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि । येप्युपदिशन्त्येवमिन्द्रियाणि जेतव्यान्येवमरिषड्वर्गस्त्याज्यः सामाद्युपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः संधिविग्रहचिन्तयैव नेयः कालः स्वल्पोपि सुखावकाशो न देय इति तैरप्येभिर्मन्त्रिबकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते । के चैते वराकाः । येपि मन्त्रकर्कशाः शास्त्रतन्त्रकाराः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः । कृतं वा तैः शास्त्रानुष्ठानम् । तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी । पठन्तश्चापठद्भिरतिसंधीयमाना बहवः । नन्विदमुपपन्नं देवस्य यदुत सर्वलोकवन्द्या जातिरयातयामं वयो दर्शनीयं वपुरपरिमाणा विभूतिस्तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेनैव मा कृथा वृथा । सन्ति हि ते दन्तिनां दशसहस्राणि हयानां च लक्षत्रयमनन्तं च पादातम् । अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि । सर्वश्चैव जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति । किमिदमपर्याप्तं यदन्यार्जनायासः क्रियते । जीवितं हि नाम जन्मिनां चतुःपञ्चान्यहानि । तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् । अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते । नार्जितस्य वसुनो लवमप्यास्वादयितुमीहन्ते । किं बहुना । राज्यभारं

---

2. C. W. omits च.—3. यावता च न विना नयेन लोकयात्रा B. यावता च नयेन भवति लोकयात्रा C. W. omits याति.—4. न च C.—10. मतिकर्कशाः W. (मंत्रशास्त्रलकाराः *sic* A).—11. °विशालच्यवनपुत्र° A. B.—16. बहुवर्ग° A.—C. omits एव.—17. C. W. omit च after हयानां.—18. सर्वश्चेष A.—21. जन्मवतां B. W.— 23. वस्तुनो A. W.

केन्द्रस्य हस्ते राज्यमिदं पतितम् । अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः । अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नोपि द्वेषः सद्वृत्तमस्मै न रोचयेत् । भवतु । भविता तावदनर्थः । स्तम्भितपिशुनजिह्वो यथाकथंचिदभ्रष्टपदस्तिष्ठेयमिति ।

एवंगते मन्त्रिणि राजनि च कामवृत्ते चन्द्रपालितो नामाश्म-केन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्वृत्तः पितुर्निर्वासितो नाम भूत्वा बहुभिश्चारणैर्वह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नकिंकरैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत् । अमुना चैव संक्रमेण राजन्यास्पदमलभत । लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत् । देव यथा मृगया ह्युपकारिकी न तथान्यत् । अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः । कफापचयादारोग्यैकमूलाशयाग्निदीप्तिः । मेदोपकर्षादङ्गानां स्थैर्यकार्कश्यलाघवादीनि । शीतोष्णवातवर्षक्षुत्पिपासासहत्वं, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानं, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातैः स्थलपथशल्यशोधनं, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनमाटविकवर्गविश्रम्भणमुत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः । द्यूतेपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम् । जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वम् । पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः । अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादत्यन्तं बुद्धिनैपुण्यम् । एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम् । अध्यवसायसहचरेषु साहसेष्वभिरतिः । अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता मानावधीरणमकृपणं च शरीरयापनमिति । उत्तमाङ्गनाभोगेप्यर्थधर्मयोः

9. A omits च.—10. तत्तादित्यवर्णयत् B. C.—13. °अतिलाघवानि B. C.—15. °घातेन B. W.—17. A. omits शक्ति—19. जयपराजयारनवस्थानात् A.—22. अचित्य A.—अध्यवसायग्रहचरेषु A.—24. शरीरवापनम् L.

सकलीकरणम् । पुष्कलः पुरुषाभिमानः । भावज्ञानकौशलम् । अलोभक्लिष्टमाचेष्टितम् । अखिलासु कलासु वैचक्षण्यम् । अलब्धोपलिप्सालब्धानुरक्षणरक्षितोपभोगमुक्तानुसंधानघटानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम् । उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयतया परं सुखाश्रयत्वम् । गरीयसी परिजनव्यपेक्षा । स्मितपूर्वाभिभाषित्वम् । उद्रिक्तसत्त्वता । दाक्षिण्यानुवर्तनम् । अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति । पानेपि नानाविधरोगभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोवस्थापनम् । अहंकारप्रकर्षादशेषदुःखतिरस्करणम् । अनङ्गरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम् । अपराधप्रमार्जनान्मनःशल्योन्मूलनम् । अशाठ्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम् । मत्सराननुबन्धादानन्दैकतानता । शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः । संविभागशीलतया सुहृद्वर्गसंवर्गणम् । अनुपमानमङ्गलावण्यम् । अनुत्तराणि विलसितानि । भयार्तिहरणाच्च साङ्ग्रामिकत्वमिति । वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमुपकारकाणि । नहि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलमवलम्बितुं च लोकतन्त्रमिति । असावपि गुरूपदेशमिवादरेण तस्य मतमन्ववर्तत । ततस्तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि । सर्वश्च स्वसमानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमुखानि विटविधेयतया विभोरहरहर्व्यवर्धन्त । सामन्तपौरजानपदमुख्याश्च समानशीलतयोपालब्धविश्रम्भेण राजा सजानयः पानगोष्टीष्वभ्यन्तरीकृताः स्वं स्वमाचारमत्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्रः । तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रापा बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गना-

14. वच- नारुष्यं A. C.— 18. B. C. omit च.— 23. सजानवाः A. सज्जनः B.

जनः पांसुलजनभाङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तॄन्धातृगणमन्त्रणान्यशृणोत् । तन्मूलाश्च कलहाः साम्र्षणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहतपरिहृतयः प्रहताः पातकपथाः । हतबान्धवा हतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः । दण्डश्चायथाप्रणीतो भयक्रोधावजनयत् । कृशाकुटुम्बेषु लोभः पदमधत्त । विमानिताश्च तेजस्विनो मानेनादह्यन्त । तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः । तदा च मृगाटवीषु मृगबाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोग्निविसर्गैर्व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैरिष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्धनैर्गुल्मतृणगूढच्छन्नतटप्रदरपातहेतुभिर्विषममार्गप्रधावनैर्विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैर्विष्वग्विसरविच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैर्मृगदेहापराद्धैर्नामेषुमोक्षणैः सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैराटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधैरक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैरितरेषां हिंसोत्पादनैर्गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तॄनुभयं वा प्रहृत्य तत्साहसोपन्यासैर्योगनारीहारितानां सङ्केतेषु प्रागुपनिलीय पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणैरुपप्रलोभ्य बिलप्रवेशनेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैर्मत्तगजाधिरोहणाय प्रेर्य प्रत्यपायनिवर्तनैर्व्यालहस्तिनं कोपयित्वा

1. संलग्न for पांशुलजन A.—सुलग्न mys. सुलभ° Par. सुभुग्न Bhu.—°भंगी° B. C.— 3. योद्धृभिः A. वलीयोभिः C.— 4. °परिविभूतयः B. अपहृतपरिभूतयः C. W.— 7. A. omits one तेषु.— 8. कृत्येषु corrected to our reading C.—मृगयुवेषेण B. C. मृगयुवेषता W.— 10. °वधं B. C. W.— 11. °पिपासादिवर्धनैः A. पिपासावर्धनैः इटरूपकु° M. C.—°तटप्रपातहेतुभिः A.—16. अनुप्रविश्य C.— 17. B. C. omit प्रकाशं.— 20. अभिहत्य A.— प्रवेशेषु B. C.— 21. मदगजा M.—22. प्रत्यवाय° B. W.

लक्षीकृतमुख्यमण्डलेष्वपक्रमणैर्द्वयर्थावैं विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैर्योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैर्वस्त्राभरणमाल्याङ्गरागादिषु रसदानकौशलैश्चिकित्सामुखेनामयोपबृंहणैरन्यैश्चाप्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन् ।

अथ वसन्तभानुर्भानुवर्माणं वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत् । तत्परामृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत् । सर्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्य प्रियतरोऽभूत् । अपरेऽपि सामन्ताः समगंसत । गत्वा चाभ्यराति नर्मदारोधसि न्यविशत् । तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्याल्पनाटकीयां क्ष्मातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्तकौशलामाहूयानन्तवर्मा नृत्तमद्राक्षीत् । अतिरक्तश्च भुक्तवानिमां मधुमत्ताम् । अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त । प्रमत्त एष राजा कलत्राणि नः परामृशति । कियत्यवज्ञा सोढव्या । मम शतमस्ति हस्तिनां पञ्चशतानि च ते । तदावां संभूय मुरलेशं वीरसेनमृषीकेश्वरमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं च नागपालमुपजपावः । ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपवर्तेरन् । अयं च वानवास्यः परं मे मित्रम् । अमुनैनं दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्रहरेम । कोशवाहनं च विभज्य गृह्णीम इति । हृष्टेन चामुनाभ्युपेते विंशतिं वरांशुकानां पञ्चविंशतिं काञ्चनकुङ्कुमकम्बलानां प्राभृतीकृत्याग्रमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत् । उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य चानन्तवर्मा नयद्वेषादाभिपत्वमगमत् । वसन्तभानुश्च तत्कोशवाहनमवशीर्णमा-

3. योगाङ्गनाभिः M.—10. अभ्यनी W.— नर्मदारोधसि—10. अभ्यर्णं W. G.—11. सामन्तकुन्तलपते, M.— 13. अतिरक्त- etc. to मत्ताम् omitted by wilson.—14. स्त. A.—16. मत्तहस्तिनां A.—17. मर्चकेदं साविकन M. W.—कुमारगुप्तनाहासिक्यनाथं (sic) A. कुमारगुप्तनासिक्यनाथं B. सासिक्यनाथं W.—G.— 24. A. omits नद्. C. नष्ट कोशकोशवाहनवर्गाणि च वसंतभानु-.

त्माविष्टिलमेव कृत्वा यथाप्रयासं यथावलं च विभज्य गृह्णीत युष्मदनुज्ञया येन केनचिदंशेनाहं तुष्यामीति शाठ्यात्सर्वानुवर्ती तेनैवामिषेण निमित्तीकृत्योत्पादितकलहः सर्वसामन्तानध्वंसयत् । तदीयं च सर्वस्वं स्वयमेवाग्रसत् । वानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत् ।

अस्मिंश्चावसरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणमस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुंधरामादायापसर्पन्नापदोस्या भावितया दाहज्वरेण देहमजहात् । अस्मन्मित्रैस्तु नीत्वा माहिष्मतीं भर्तुर्द्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताभूत् । तां चार्यामनार्योसावन्यथाभ्यमन्यत । निर्भर्त्सितश्च तया सुतामियमखण्डचारित्रा राज्यार्हं चिकीर्षतीति नैर्घृण्यात्तमेनं बालमजिघांसत् । इदं तु ज्ञात्वा देव्याहमाज्ञप्तः । तात नालीजङ्घ जीवतानेनार्भकेण यत्र क्वचिदवधाय जीवेः । जीवेयं चेदहमप्येनमनुसरिष्यामि । ज्ञापय मां क्षेमप्रवृत्तः स्ववार्त्तामिति । अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि । पादचारदुःखितं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य तत्रापि राजपुरुषसंपातभीतो दूरध्वमपसरन्नत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः । त्वमेवास्यातः शरणमेधि निःशरणस्य राजसूनोरित्यञ्जलिमवध्नात् । किमीया जात्यास्य मातेत्यनुयुक्ते मयामुनोक्तम् । पाटलिपुत्रकस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोस्य माता जातेति । यद्येवमेतन्मातुर्मत्पितुश्चैको मातामह इति सस्नेहं तमहं सस्वजे । वृद्धेनोक्तम् । सिन्धुदत्तापुत्राणां कतमस्ते

8. अस्य A.—9. अस्मादृशौर्मैत्रैः B. W.—11 तया वसुंधरा M.—13. अवस्थाय A.—जीव B.—14. क्षेमवृत्तः M.—15. W. omits राजकुले. A. drops a line, omitting the Words between निर्गमय्य and तत्रापि.—16. पादचारदुःस्थितं B. दूरं B. W.—16. दूराध्वमपा सरम् P. दूरादप सरम् M.—20. किमीयोयमीत्यनुयुक्ते A.—21. कौशल° A. कोशल°. B.—22. जामातेति A.—23. सिन्धुदत्त° A. W.

पितेति । सुश्रुत इत्युक्तो सोत्यहृष्यत् । अहं तु तं नयावलिप्तमश्मकेन्द्रं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयमिति प्रतिज्ञाय कथमस्यैनां क्षुधं क्षपयेयमित्यचिन्तयम् । तावदापतितौ च कस्यापि व्याधस्य त्रीनिपूनतीत्य द्वौ मृगौ स च व्याधः । तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्यावधिषम् । एकः सपत्राकृतोन्यश्च निष्पत्राकृतोपतत् । तं चैकं मृगं दत्त्वा मृगयवेन्यस्यापलोमत्वचः क्रोमापोह्य निष्कुलाकृत्य विकृत्योर्वस्थिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तप्तेनामिषेण तयोरात्मनश्च क्षुधमलक्षिपम् । एतस्मिन्कर्मणि मत्सौष्टवेनातिहृष्टं किरातमस्मि पृष्टवान् । अयि जानासि माहिष्मतीवृत्तान्तमिति । असावाचष्ट । तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः । किं न जानामि । प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं लिप्सुरभ्येतीति तेन सोत्सवा पुरीति । अथ कर्णे जीर्णमत्रवम् । धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति । तत्प्रतिगत्य कुशलमस्य मद्वार्त्तां च देव्यै रहसि निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशः कार्यः । स दुर्मतिरन्तः प्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति । पुनस्त्वया तन्मुखेन स वाच्यः । यदपेक्षया त्वदुक्तमत्यक्रामिषं सोपि बालः पापेन मे परलोकमगात् । अद्य तु त्वदादेशकारिण्येवाहमिति । स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यते । पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः । स एवायमसिप्रहारः पापीयसस्तवास्तु यद्यस्मि पतिव्रता । पुनरनेनागदेन सङ्क्रमितेम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया । मृते तु तस्मिंस्तस्यां च निर्विकारायां

1. अहं तु दुर्नयावलिप्तं A. नयावलिप्तमश्मकनयेन P.— 3. A. omits च.— 5. एकश्च B. W.— 6. मृगयेव दत्त्वा C. दत्त्वैकं मृगयेव, omitting तं च and मृगं.— 7. व्यङ्ग्य for व्यस्थि A.—8. अताप्सं W. अत्यतापं अत्यताक्षिपम् M.— 17. तस्या मुखेन C. तया त्वन्मुखेन W.— 19. तवादेशकारिणी C.—अभिपत्स्यते A.— 22. मत्तु B. W. तवास्तु पापीयसः C.— 23. मृते च A.—निर्विकारायां मतौ सत्यां A. C. omits सत्यां.

सत्यां सतीत्येवैनां प्रकृतयोनुवर्तिष्यन्ते । पुनः प्रचण्डवर्मणे संदेश्यम् । अनायकमिदं राज्यम् । अनेनैव सह बालिकेयं स्वीकार्यैति । तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुराद्बहिरुपश्मशानं वत्स्यावः । पुनरार्यप्रायान्पौरवृद्धानामात्यांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी । स्वप्नेद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः । अद्य चतुर्थेहनि प्रचण्डवर्मा मरिष्यति । पञ्चमेहनि रेवातटवर्तिनि मङ्गवने परीक्ष्य वैजन्यं जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोपि द्विजकुमारो निर्यास्यति । स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति । स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः । सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पितेति । तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यत इति । स साम्प्रतमित्यतिप्रीतः प्रायात् । अर्थश्चार्यं यथाचिन्तितमनुष्ठितोभूत् । प्रतिदिशं च लोकवादः प्रासर्पत् । अहो माहात्म्यं पतिव्रतानाम् । असिप्रहार एव हि स मालाप्रहारस्तस्मिञ्जातः । न च शक्यमुपधियुक्तमेतत्कर्मेति वक्तुम् । यतस्तदेव दत्तं तद्दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं न मृत्युः । योस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेदिति ।

अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षकलमब्रवीत् । भगवन्नयमञ्जलिः । अनाथोयं जनोनुगृह्यताम् । अस्ति ममैकः स्वप्नः । स सत्यो न वेति । मयोक्तम् । फलमस्याद्यैव द्रक्ष्यसीति । यद्येवं बहु भागधेयमस्या वो दास्याः स खल्वस्याः सानाथ्यशंसी स्वप्न इति मद्दर्शनवद्धरागसाध्वसां

2. अमुनैव C.— 4. पुनराकार्यार्यभायान् C.— 5. C. omits अद्य.— 6. A. omits मङ्गवने.— 7. वैजनत्यं B. C. A. writes परीक्षजनन्यां.— ०. बालमनेव C. A. writes बाल तै (*sic*).— 9. A. omits मया. C. मयैव.— 14. A. omits स.— 15. B. W. omit च.—शक्तं C.— तदेव दत्तं दाम B. W. तदेव दत्तं तावद्दाम C.— 17. अतिवर्तेत A.— 22. B. C. omit स खल्वस्याः.—सनाथ्यशंसी B.

मञ्जुवादिनीं प्रगमय्य भूयोऽपि सा हर्षगर्भमब्रूत । तच्चेन्मिथ्या सोऽयं युष्मदीयो बालकपाली श्वो मया निरोद्धव्य इति । मयापि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्येणैवमस्त्विति लब्धभैक्षो नालीजङ्घमाकार्य निर्गम्य ततश्च तं चानुयान्तं शनैरपृच्छम् । कालादल्पायुः प्रथितः प्रचण्डवर्मेति । सोऽब्रूत । राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैरिति । यद्येवमुद्याने तिष्ठेति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे कस्यांचिच्छून्यमठिकायां मात्राः समवतार्य तद्रक्षणनियुक्तराजपुत्रः कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम् । अनुरञ्जितातपे तु समये जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचङ्क्रमणमूर्ध्वपादालातपादापीडवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि पुनरादायादायासन्नवर्तिनां क्षुरिकास्ताभिरुपाहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणः क्षुरिकयैकया प्रत्युरसं प्रहृत्य जीयाद्धर्षवहलं वसन्तभानुरिति गदन्प्रज्ञातमुत्कर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य तावतैव तं विचेतीकुर्वन्नाकुलं च लोकमुच्चकुर्वन्द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम् । अवप्लुत्य चोपवने मदनुपातिनामेष पन्था दृश्यत इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतासटपादन्यासया तमालवीथ्या चानुप्राकारं प्रात्रा प्रतिधावितः पुनरवाचीचितेटकात्वादलक्ष्यपादेन प्रद्रुत्य लङ्घितप्राकारखातवलयस्तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य प्रतिमुक्तपूर्ववेषः सह

2. बाल॰ कपाली A.—W. omits अपि.—A. writes सस्मितपिहित (sic)—5. राजे चास्थानंडपे A.—6. C. omits एव.—B. omits तं.—8. मन्त्रां A.—8. वीरतक A.—9. अनुरञ्जितातपे B. W.—9. रञ्जितभावे M. P. जनसमान॰ A. जनसमानज्ञानो- पयोगीनि B. W. योगीनि C.—10 संहृत्य M. रुदितानि A. रुतादि C.—12. W. C. omit one आदाय.—13. A. omits करणानि.—15. मतिहर्त्तु A. परभटस्य for कस्यापि चारभटस्य A.—16. A. omits शिखर.—अन्यं च लोकं A.—18. मदनुपातिनामेष एव. A.—A. omits समीकृत—21. प्रतिविमुक्त॰ A.

कुमारेण मत्कर्मतुमुलराजद्वारि दुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम् प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं भग्नपार्श्वस्थैर्य-स्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम् । अथ गलति मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव । देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दापयित्वा प्रचण्डवर्मणे चण्डवर्मणे च तामवस्थामश्मकेन्द्रोपधिकृतामेव संदिश्योत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं विधाय तद्दत्तदृष्टिः सह जनेन स्थित्वा पटीयांसं पटहशब्दमकारयत् । अणुतररन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतैकपार्श्वमेकतो निवेश्य निरगमम् । निरगमयं च कुमारम् । अथ यथापुरमर्पयित्वा दुर्गामुद्घाटितकपाटः प्रत्यक्षीभूय प्रत्यग्रहृष्टदृष्टि स्पष्टरोमाञ्चमुद्यताञ्जलि रूढविस्मयं च प्रणिपतन्तीः प्रकृतीरभ्यधाम् । इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति । स एष राजसूनुरापन्नो मया सकृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः । तमेनमद्यप्रभृति मत्पुत्रतयाऽमन्दमातृपक्ष इति परिगृह्णन्तु भवन्तः । अपि च दुर्घट-कूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्व-मस्य रक्षितारम् । रक्षानिर्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मह्यमार्प्येति । श्रुत्वैतदहो भाग्यवान्भोजवंशो यस्य त्वमार्यादत्तो

1. तुमुलेन.—अभ्यगाम् A.—5. B. omits एव.—दत्त्वा B. W.—6. A. C. W. omit चण्डवर्मणे. It is supplied in the margin in C.—8. सर्वजनन्यं तद्भवनं A.—9. सदंतदृष्टिः B. संदत्तदृष्टि· C. दत्तदृष्टिः W. तद-नन्तरेण A.—10. अनुतरं W.—A. omits नादेन.—11. दुश्चरं A.—भूतपार्श्वं A.—12. यथापूर्वं W.—13. प्रत्यक्षीभूय ह्टहृष्टस्पृष्टरोमांचम् A.—14. प्रतिपतन्ती A. इत्थं मन्मुखेन, &c. C.—15. स एव A. B. W. omit this clause.—16. शार्दूलरूपया A.—18. प्रकटशाठ्य B. निष्ठुराश्मघट्टनं मां मानयध्वमस्य M.— 19. A. puts अस्य afer. स्वसेयं.—रक्षा° &c.—A. omits this sentence.—B. C. omit मह्यं ममार्पयेति. C.—भाग्यं भाग्यवान् C.

नाथ इत्यप्रीयन्त प्रकृतयः । सा तु वाचामगोचरां हर्षावस्थामस्पृशन्मे श्वश्रूः । तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम् । प्रपन्नायां च यामिन्यां सम्यग्बिलं प्रत्यपूरयम् । अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मे समर्थयमानो त्वदाज्ञां नात्यवर्तत । राजपुत्रस्यार्यपुत्र इति प्रभावहेतुप्रसिद्धिरासीत् । तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्राजकार्याण्यन्वतिष्ठम् । अचिन्तयं च । राज्यं नाम शक्तित्रयायत्तम् । शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते । मन्त्रेण हि विनिश्चयोर्थानाम् । प्रभावेण प्रारम्भः । उत्साहेन निर्वहणम् । अतः पञ्चाङ्गमन्त्रमूलो द्विरूपप्रभावस्कन्धश्चतुर्गुणोत्साहविटपो द्विसप्ततिप्रकृतिपत्त्रः षड्गुणकिसलयः शक्तिसिद्धिपुष्पफलश्च नयवनस्पतिर्नेतुरुपकरोति । स चायमनेकाधिकरणत्वादसहायेन दुरुपजीवः । यस्त्वयमार्यकेतुर्नाम मित्त्रवर्ममन्त्री स कोसलाभिजनत्वात्कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तस्तन्मतिमवमत्यैव ध्वस्तो मित्त्रवर्मा । स चेल्लब्धः पेशलमिति । अथ नालीजङ्घं रहस्यशिक्षयम् । तातार्यकेतुमेकान्ते ब्रूहि । कोन्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति । स चायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः । किमुद्वीर्येत ग्रस्येत वेति । स यद्वदिष्यति तदस्मि बोध्य इति । सोप्यन्यदैवं मामावेदयत् । मुहुरुपास्य प्राभृतैः प्रवर्त्य चित्राः कथाः संवाह्य पाणिपादमतिविस्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन । सोप्येवमकथयत् । भद्र मैवं वादीः । अभिजनस्य शुद्धिर्दर्शनमसाधारणं बुद्धिनैपुणमतिमानुषं प्राणबलमपरिमाणमौदार्यमत्याश्चर्यमस्त्रकौशलमनल्पं शिल्पज्ञानमनुग्रहार्द्रं चेतस्तेजश्चाव्याविपद्यमभ्यमित्त्रीणमित्यस्मिन्नेव संनिपातिनो गुणाः येन्यत्रैकैकशोपि दुर्लभाः ।

3. अथालब्धरन्ध्रश्च. —4. मम B. W.— 6. वृत्तचौलुकं A.—10. त्कर्मभर्वाजो A.—17. त्रिगुण° A.—14. तमवमत्यैव ( *sic* ) A.—16. आचार्यकेतुं A.—23. अपरिमितदत्तं W. तेजश्चाप्याविपद्यमित्यस्मिन्संनिपतन्तिगुणाः M. A. omits.

द्विषतामेष निरविल्वद्रुमः प्रजाणां तु चन्दनतरुस्तमुद्धृत्य नीतिज्ञं नन्यमश्मकमिमं च राजपुत्रमनेन पित्र्ये पदे प्रतिष्ठितमेव विद्धि । नात्र संशयः कार्य इति । तच्चापि श्रुत्वा भूयो भूयश्चोपधाभिर्विशोध्य वं मे मतिसहायमकरवम् । तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम् । तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डलमलुब्धतामभिख्यापयन्धार्मिकत्वमुद्भावयन्नास्तिकान्कदर्थयन्कण्टकान्विशोधयन्नमित्रोपधीरुपघ्नंश्चातुर्वर्ण्यं च स्वधर्मकर्मसु स्थापयन्नभिसमाहरेयमर्थान् । अर्थमूला हि दण्डविशिष्टकर्मारम्भाः । न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यादिल्याकलय्य योगान्न्वातिष्ठम् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नाम अष्टम उच्छ्वासः ।

---

1. निरविल्वद्रुमः W.—A. omits तु.— 3. संदेहः B.—C. omits कार्यः

# APPENDIX.

ॐ नमः श्रीमहागणपतये नमः ॥

सम्पत्तिकारणमकारणमादिदेवं
दारिद्र्यवारणनिवारणसिंहमूर्त्तिम् ।
दुःखैकदारणमनन्तगुणं नृसिंहं
संसारतारणमहं प्रणमामि मूर्ध्ना ॥ १ ॥

आसीदसीमगुणो निःसीमकीर्तिः सीमन्तिनीस्पृहणीयरूपः सामन्तचक्रसेव्यः संमतः सुमतिवर्गस्य निरवधिलावण्यतिरस्कृतकुसुमचापः कुसुमपुरे राजा राजहंसो नाम । तस्य त्रिवर्ग इव मन्त्रिवर्गो मित्रवर्गश्च मतिशर्म-धर्मपाल-पद्मोद्भवनामधेयो मगधनीवृति प्रसिद्धः । तेषु मतिशर्मणः (२) सत्यशर्मसुमती धर्मपालस्य (२) कामपालसुमित्रौ पद्मोद्भवस्य (३) रत्नोद्भवसुमन्त्रसुश्रुता इति विश्रुताः सुता आसन् । तैः संसेव्यमानो भूपतिर्महिष्या वसुमत्या सह वसुमतीं पालयन् विषयसुखानि भुञ्जन्भञ्जयन्प्रतीपविषयान् समितिजितेन मालवेन मालवेनापि हीनेन मानसारेण मानसारेणाराध्य शूलिनं लब्धदुर्जयशूलेनारातिना संग्राममाशंसमानो विदितवृत्तान्तेनामात्यवर्गेण वारितो वारितोपि नीचगमनमेवैहत । तदैव देवद्विजाराधनावाप्तगर्भा राजमहिषी मन्त्रिवर्गेण विन्ध्याटवीमनीयत । गतायां च तस्यां जन्ये रिपुमहितेन त्रिशिखेन हते रथसारथौ मद्गुलैर्वाहैः प्रापितस्तमेव वनोद्देशम् । अत्रान्तरे विदितवार्ता परमार्ता वसुमती कण्ठे कृतपाशा निराशा जीविते भव भवप्रसादाद्भवान्तरेपि मे पतिरिति क्रोशमानान्तिकचरेणाकर्णितवचनानेन गृहीता करेण विगतमोहा महामहमहास्त । एवं स समन्त्रिवर्गस्तया सह देव्या जातोपसर्गोपि निसर्गधीरो मुनेर्वामदेवस्याश्रमे समाराध्य वामदेवं गुणवत्यनेहसि जातेन सूनुना प्राप्तपरमानन्दपरम्परः प्रणम्य महामुनिं तदनुज्ञयैव विरचितजातकर्मा तं बालं राजवाहनइतिनाम्ना लालनीयमकरोत् । एवमनुभूयमानमहोत्सवे कश्चिद्वाडव एकं कुमारमादायोपसृत्य च वाचमाददे । महाराज मया

दण्डिकारण्यचरेणाताडिता कापि युवतिरनेन कुमारेण सार्द्धं विलपमाना । पृष्टा च सा मगधाधिपामात्यस्य नतिशर्मणः पुत्रो वैराग्यावेशेन गृहं जिहासुः सत्यशर्मजातापत्ययाप्यनुगतो मया मदीयमातृमरणमाकलय्य तत्रजिगमिषुः सहैव मयेमं देशमागतो न जाने कुत्र गतः किमवस्थ इत्येतद् व्याहृत्य मुमूर्च्छ जहौ च प्राणान् । अहं च कलितः करुणया तदौर्ध्वदेहिकं समाप्य विधिमिमं च दारकं भवते समर्प्य यथोचितं कर्तुमुत्सहे इति । तथेति तं सोमदत्तशर्माणमकरोन्महीपतिः ॥ १ ॥

दिनान्तरेऽपि च कोऽपि मुनिः कुमारमानीय समर्प्य च राज्ञे प्रोवाच । राजन्कस्यांचिद्वेलायां वारिधिवेलायां भ्रमता मया कापि कारुण्यं कुर्वती सकुमारा सुकुमारा जरती दृष्टा पृष्टा च कष्टं कष्टमिति निजवृत्तान्तं न्यरूपयत् । भगवन्मगधराजामात्यस्य पद्मोद्भवस्य पुत्रो रत्नोद्भवः सह सांयात्रिकैः प्राप्तो यवनद्वीपमूढकालगुप्तकन्यः प्रतीपं जिगमिषुः सगर्भया भार्यया सह समारूढः पोतम् । तद्भङ्गमूढेषु जनेषु किञ्चिद्दारवाच फलकं तद्वाप्यहं सगर्भां तां बालां प्रापय्य तीरदेशं किंकर्तव्यतामूढा तां जातापत्यामपश्यामिति तया निवेद्यमाने वृत्तान्ते समागतेन वनगजेन त्रस्तावावामपसराव । तेन च करिणा करेणोत्क्षिप्तो बालो वलीमुखेनान्तरिक्ष एव पतन्फलमिति मतिगृहीतो मुक्तश्च शैवालराशौ पतितः । मया ततः कण्ठीरववत्रासापहृते करटिनि तमुद्देशमागतासादितोऽयं कुमारः करुणाविष्टान्तःकरणेन च प्रापितो भवते इति निवेद्य याते मुनौ पुष्पोद्भवनामानं तमकरोन्नराधिपः ॥ २ ॥

इतरेद्युः कश्चिन्मुनिवरः कुमारमेकमुपादाय पुरतो भूपतेर्निधायाभ्यधात् । महाराजायं किल मैथिलेश्वरस्य प्रहारवर्मणो मगधेशराजहंसमहिषीं सगर्भामाकर्ण्य प्रियसखी मे वसुमती भवतश्च राजहंसयोर्गर्भमहं द्रष्टुमिच्छामीति पत्नीप्रेरणेन तद्दिदृक्षयाचलितस्य मध्ये मार्गे भावत्कं देशान्तरगमनोदन्तमाकर्ण्य परावृत्तस्य भ्रातृव्याक्रान्तराज्यस्य भागिनेयभवनं यियासोर्वनपथे शबरलुण्ठितसर्वस्वस्य संकुले शार्दूल-

खरनखरपातमूर्च्छितधात्रीहस्तपतितः कपिलाशवक्रोडे लब्धो मया मुनिवचसा च कलितो भावत्क इति समर्पितो भवते इति निवेद्य याते मुनौ तमपहारवर्मेति प्रसिद्धमकरोद्राजहंसः ॥ ३ ॥

अन्येद्युः कश्चित्पुलिन्दकुमारः कुमारमेकं धरेशपुरतो धरायामाधाय गिरमुदैरयत् । तदवस्थस्य प्रहारवर्मणः संकुले महति कांदिशीका धात्री रुदती सकुमारा वृत्तान्तमाख्याय त्वदेकशरणेति प्राप्ता । सोयं मयाश्रमात्त्वत्पादमूलमापादितः । इतःपरं प्रमाणं महाराज इति गते किराते तमुपहारवर्माणमकरोत् ॥ ४ ॥

अपरेद्युः सुप्तोत्थिता वसुमती स्वशय्याशायितं शिशुमेकमुपलभ्य विस्मिता सस्मितमुपगुह्य पृष्टा च प्रेयसावादीत् । महाराज स्वप्ने मणिभद्रयक्षस्य तनया तारावली लोपामुद्रासपर्य्यातः प्रतिनिवृत्ताविमुक्ते विमुक्तं पितृभ्यां परेतावासे परीतं पिशाचैरुदीक्ष्य सपुत्रस्नेहमेनमुपादाय पितृद्वारा निवेद्य पुण्यजनपतिं तदाननाच्छ्रीमतमन्त्रिमुख्यधर्मपालसूनुकामपालात्कान्तिमत्यां गूढोत्पन्नो रहस्यभेदभिया त्यक्त इति निशम्य निवेदितो भवत्यै मयेति मामुक्त्वान्तर्हितेति स्फुटमहमद्राक्षम् । महदाश्चर्यमेतत्स्वप्नोपि संवादीति श्रुत्वा राज्ञार्थपालइत्यभिधानेनानीयत प्रसिद्धिम् ॥ ५ ॥

एवं पञ्चोपलब्धाः । एवं च सुमतेः प्रमतिः सुमित्रस्य मित्रगुप्तः सुमन्त्रस्य मन्त्रगुप्तः सुश्रुतस्य विश्रुत इति चत्वारः । एभिर्मन्त्रिकुमारैरनुभूयमानशैशवसुखो विजहार राजवाहनः । एवं च कियताप्यनेहसा वामदेवानुग्रहाद्राजहंसेनाजीयत मानसारः । स्वपुरं स्वजनपदं सनाथीकुर्वता मागधो लोकोगाधानन्दमहोदधिगाहनदशामनीयत च । इति प्रथमोच्छ्वासः ॥

अथ कदाचित्कार्त्तान्तिकवार्ता[illegible] [illegible]चक्रवर्तिलक्षण इत्याकलय्य संप्रार्थितवामदेववचनपरिपाटीतः शौरिसूनुना शाम्बेन सह वनिताभिः सारसारे कासारे कश्चिन्मल्लिकाक्षो मृणालेन निगडितः पादयोर्द्विमुहूर्तं मुक्तश्च पश्चात्स तेन त्वं मासद्वयमेवं विपत्पात्रं भविष्यसीति शप्तेना-

सुना राजवाहनेन तातपदं निलीय चक्रवर्तिभूपालेन भवितव्यं मानसारस्य दुहितावन्तिसुन्दरी मानानेन परिणेष्यत इति निशम्यारंसीद्राजहंसः । अथ कदाचिद्राजवाहनो रूढयौवनः पितुराज्ञया मृगयाविहाराय मृगयात्राप्रवृत्तः कतिपयैर्मन्त्रिवर्गैः सकटकं निवेश्य पर्वतकटके मृगान्वेषी दूराद्दूरतरं गतः कृत्तिवाससः प्रासादमासदत् । अवरुह्य यानादारुह्य च प्रासादभूमिकां कृतगिरीशसपर्यः प्रसादयितुमीशं प्रदक्षिणीकुर्वन्बहिर्गः कंचिद्वाडवं क्षीणं वपुषा यातनयासीनं न्यभालयत् । तापैरिव लक्ष्यसे नैतल्लवार्थीयः साधु साधनीयमनेन चेत्त्वमीहितमस्मै शाधीति प्रोक्तेनानेन तेनोक्तम् । महाभाग राग एव मे दुर्लभे वस्तुनि वरीवृतीति मां चातिमात्रं चिन्तासागरे मज्जयति । तत्सत्यीकरिष्यते स्वर्गं विश्रान्तः । न चेदेवं क्षपयिष्यति मां विषमशर इति श्रुत्वा निषण्णः । तावदस्तगिरिशिखरवर्ती लोकबन्धुर्बन्धुजीवकुसुमारुणां चारुणीमनुजग्राह । अग्रसच्च भुवनमन्धं तमः । आविरासीच्च ब्राह्मणमनस्यानन्दचन्द्रः । उल्ललास च विप्रसुखकर्तुमुत्साहसिन्धुः कुमारस्य । निशीथे विलपथेन निर्गत्य प्रनयनार्थं पायसा त्रैपथगेन संस्नाप्यानुलिप्य वर्णकेन यूथिकाकुसुमैरभ्यर्च्य कृतप्रणामा प्रार्थनीयमर्थमभ्यर्थ्य पुनर्वेश्म प्रविशन्ती दृष्टा काचिन्मत्तकाशिनी । तद्दिङ्मनङ्ग मूलं मे महारागसागरस्येति प्रेरितेनानुना सावेगानुयाता च कुमारेण । अथ चरणध्वानाकर्णितान्वक्षया परावृत्तग्रीवया दृष्टौ त्रपाभरेण न पृष्टौ च । तत्र महति पुरे रमणीये च पल्ये पर्यङ्कमारुह्यासीनां तामप्राक्षीत्कुमारः । कासि वा सुभ्रु कस्यासि संनतापाङ्गि । त्वयानङ्गोऽपि साङ्गतां नीतो निजापाङ्गेन । किंच कारणमत्र वासे का वा जातिरनुगृहीता सौन्दर्यावतारेणाद्वितीयेनानुना वपुषा चेति । सा च सविस्मितं सस्मितं चाकर्णितकोऽयं कोऽयमिति समन्दाक्षं निभालयन्ती समलपत् । भद्र मनुवेदानवस्य तनयां मां विद्धि । कदाचित्सुरासुरवृन्दयोर्महति जन्ये वीरगतिं गते पितरि भगवता पुराणपुरुषेण मां निरीक्ष्य मन्ये कन्येयमदारणेति सखेदेन सानुकम्पमभाषि । बाले कालेनैवं विहिते पत्तनने-

तदधिष्ठायामुना किल विलपथा निर्गत्यान्धकारातिमभ्यर्च्यानुदिनं परावृत्ताया अन्धकारातिगहनमेतत्प्रविश्य यस्तेनुयाता निजजीविते वीताशो वीतहोत्रे च प्रवेष्टा स ते भर्तेति । तदाज्ञां पालयन्ती प्रतीक्षे ।

तदाकर्ण्य निर्वर्ण्य च ता वाडव प्रविश वाडवं त्रिशङ्कं कैटभारेर्नान्यथा भाषितमिति कुमाराज्ञया प्रविष्टो हुष्टो हव्यवाहनं तत्क्षणाच्च दिव्यरूपयौवनगुणैरुपेतः पुनरुदगात् । तयोश्च परिणयनमहोत्सवमनुभूय राजवाहनो निरगात् । अगाच्च गाधचिन्तासागरमग्नताम् । हन्त क्व ते मामका मन्त्रिण इति तानन्वेष्टुमसहायोऽहयश्च पदातिरेव नमुचि-कन्या-दत्त-मणि-विशेष-प्रभावाननुभूयमानक्षुत्पिपासाक्लेशो देशं कंचिद्गन्तुं नेशोपि दैवादाससाद मिथिलां च । शिथिलादरश्चान्यत्र गन्तुमनु विशालापरनाम्नीं पर्यटन्सप्ततन्तुं तन्वानानध्वरविदो विदुषोऽवेक्ष्य त्रिवक्षुः सोमदत्तमद्राक्षीत् । अप्राक्षीच्च निदाघार्त्तः सोमदत्तानन्द इव । सखे वयस्य कथमिमं देशं सनाथीकृतवानसि क्व चान्ये सखाय इति । सोपि सप्रणयं प्रणम्य प्राञ्जलिरुदानन्दाश्रुगद्गदमगदत् । महाराज ( राज ) न्यकुमारलोकमुखादवगम्य भवतः सदाशिवसपर्यायै तत्प्रासादगमनं मित्रगणोपि प्राप्तस्तमुद्देशमनासाद्य च भवन्तं भगवन्तं भगनेत्रहरणं भर्गमाराध्य निर्गच्छन् द्वारदेशे निरीक्ष्य लेखं कस्यायं लेखो लेखर्षभस्येवेति सविस्मयमवाचयत् । द्विजोपकृतये विवरप्रवेशं निवार्य कंचिदनेहसं क्षपयित्वा भवद्दर्शनोत्सुकः कांदिशीको निरगादिति वाचयन्नेव वाष्पाम्बुपूरनयनाम्बुजः श्रमतान्वेक्षणप्रवणान्तःकरणः कंचिदनेहसं सहैव भूत्वा ततः पृथक्पृथग्देशानगात् । न जाने चरितमन्येषाम् । अहं तु पर्यटन्नपारां पारानाम्नीं स्रवन्तीं प्राप्तः कृतावगाहादिविधिर्विधिवशादेकं मणिं न्यभालयम् । अकरवं च तत्संग्रहम् । निरगां च ततः पथि सग्रहमिव क्षुत्क्षामविग्रहं कृतविग्रहमिव दैवेन विहितनिग्रहमिव रोगेण विरचितानुग्रहमिव दारिद्र्येण कंचिद्भूमिदेवमासाद्य प्रेरितो दयया मणिं तस्मै व्यश्राणयम् । स च जातानन्दः क्वचिन्नन्दनन्दनमन्दिरे विश्रान्तः । ततः प्रस्थितश्च धृतो दण्डधरैर-

न्विष्टश्चलश्च । ततस्तमासाद्य मणिं दुष्टपाटच्चरोसीति बद्धस्ताडितः कशाघातविवशं कारागृहं नीयमानः संगतश्च मया । तेन च ममायं मणिप्रदातेति निरूपिते तमुन्मुच्य तदवस्थं मां कृतनिकारं कारागारमासादयामासुः । रत्नान्तराणि च याचमानास्त्रासजर्जरचेतसं मामकुर्वन् । निवेशितश्चाहं बन्दिशालायां कांश्चिदन्यानपि स्वसमानव्यसनानद्राक्षम् । अप्राक्षं च बन्धहेतुम् । ते तु मां स्वोदन्तमावेदयन् । ततश्चेममर्थं निरचैषम् । यदेते कुलूतराजपुरुषाः कुलूतराजमन्त्रिणा करे दत्तेप्यपरितुष्टेन विशालेश्वरेण कुलूतराजतनयामनयादभिलषता तदानयनाय प्रहितेषु दूतेषु कुपितेन कुलूतेन प्रच्छन्नघातुकाः प्रेषितास्त एतद्गृहचराः पाटच्चरा दैवात्तमनासाद्यासाद्य च रत्नानि निर्गच्छन्तो यन्त्रिता वध्याश्चेति कृत्वा बन्धनागारे कारिताः । ततस्तानब्रवम् । भद्रा यदि वश्छेत्स्ये बन्धं तर्हि वो मन्त्रिणं यथा द्रक्ष्ये तथा विधास्यध्वे । तैश्च ओमिति स्वीकृते स्वबन्धनमाच्छिद्य तानपि मुक्तबन्धनान्विधायापसृत्य तैः सह मन्त्रिणमपश्यम् । तैरावेदितार्थश्च मन्त्री पश्चादापततस्तस्करजिघृक्षया दण्डधरान्निराकृत्य तन्निवेदितवृत्तान्तेनात्तप्रतिघेन राज्ञा प्रेषितान्कातिचिद्भटान्पराजित्य पराजयकुपितेन युयुत्सुना विशालेशेन पराजितः । एतदन्तरे मन्त्रिणा दत्ताश्वश्चन्द्रहासपाणिः श्येनपातं निपत्य निपात्य च विशालेशं मन्त्रिणमानन्दतुन्दिलमकरवम् । तेन च तुष्टेन कुलूतेशतनया सविशाला मदायत्ता कृता । राज्यं चेदं दक्षिणात्वेन प्रदत्तम् । एवं च निश्चिन्तं चिन्तयानो भवन्तं सप्ततन्तुं तन्वानस्तत्प्रसादेन श्रेमतप्रसादपात्रं जातोस्मीति निरूपिते च तेन तदादरात्तत्र कानिचिद्दिनान्यतिवाह्य मदाज्ञया मया सह संगच्छसे इति तमाज्ञाप्य राजवाहनो मालवेन्द्रनगरीमयासीत् । इति द्वितीय उच्छ्वासः ॥

अथ कदाचित्केनचिद्देनेनसानेहसा प्राप्तो मालवेन्द्रनगरीं वसतिमन्विष्यन् पुष्पोद्भवनामानं सखायं संगत्य तेन यथार्हं संमानितः पृष्टश्च स्वोदन्तमुप्रदन्तदीधितिं निजगाद । सखे पुष्पोद्भव निर्गतस्त्वं ब्राह्मणमुपकृत्य सखीनन्विष्यन् प्राप्तोस्मीमं देशमिति । शुश्रूषे तवोदन्तम् ।

सोपि प्राञ्जलिर्वक्तुमुपक्रान्तवान् । महाराजनन्दन निजसखिगणसमानव्यसनो भवद्वृत्तान्तान्वेषी क्वचिदेकं पुरुषं भृगुपातेनात्मानं जिघांसमानमाबद्धपरिकरं विलोक्य कोयं साहसीति तमुपसृत्याब्रवम् । भद्र किमिदं चिकीर्षसे नात्मनीनम् । आत्महत्या नाम पराकाष्ठा पापानाम् । नैतदुचितमिति मदुक्तमाकर्ण्य किणपेलितो (?) वर्णयामि स्वकथामाकर्णयेति रुद्धकण्ठमस्पष्टवर्णमवर्णयत् । राजहंसस्य नृपतेरमात्यपद्मोद्भवपुत्रो रत्नोद्भवो बाल एव बाल्येन सांयात्रिकः कंचिद्द्वीपमासाद्य कृतोद्वाहः सभार्यः स्वं देशं प्रतीपमाजिगमिषुर्भग्नपोतः फलकमारुह्य तटमासाद्याफलकेन किमनेन देहेनेति जिहासुर्देहं केनचिद् ज्ञानिना नैतदुचितम् । षोडशहायनातिक्रान्तो लप्स्यसे पुत्रिणीं स्वां भार्यामिति निवारितो वारितोसूनरक्षयम् । संप्रत्यवधिव सरे निरिशः स्वार्थे जिहासुरसून्सूनुरिव प्रेम्णा वारितस्त्वयेति निगदतस्ततो निचाय्य पितरं प्रणम्य तात सोहमपराधी त्वत्सूनुर्येन मया बालक्रीडनकेन निंदितोसि । तथापि दैवकृतेर्थे न मेपराध इत्यनुग्राह्य एवास्मीति । श्रुत्वैव सानन्देन तेन परिष्वक्तो मूर्धन्युपघ्रातश्चाभिषिक्तश्चाश्रुणा तथाविधमाचारं विधाय तरुतले यावन्निषीदावस्तावदेव धावत दावपावकादवतेति कांश्चिद्वर्णान्सकरुणानश्रौषम् । गतश्चाहं कांचिज्जरतीं युवतिं चापरामद्राक्षम् । समाहिते च ते । कथमेतद्दुःखभाजनं भवत्याविति प्रश्नप्रेरिता जरती व्याजहार । वत्स कालगुप्ततनयामेतां परिणीय रत्नोद्भवे जिगमिषौ च स्वं देशं विधिवशात्प्रवहणभङ्गमासाद्य लब्धफलका धात्र्यहमेतां सगर्भां प्राप्तवेलामकार्षम् । प्राप्ततटा च प्रासूत सुतम् । तावतैव वन्यमत्तमातङ्गापतनापसृता न जाने बालवृत्तान्तम् । याते च तस्मिन्नेनामासादयं न पुनर्बालम् । सैषा पतिपुत्रहीना मृत्यवे स्पृहयन्ती प्रतिषिद्धा मुनिना त्रिकालदर्शिना सहस्व षोडश समा इति । तद्यावधिदिने दिनेशमुपस्थायाटवीदहनदहने निवारिता त्वयेति । कस्त्वं भद्र सभाग्यायाः कुक्षिजः । ततोहमब्रवम् । स एष जातमात्रपरित्यक्तो दैवेन त्रातः प्रणमति पुष्पोद्भव इति पादयोर्निपतितं परिष्वज्य प्रस्नुतस्तनी सहर्षा महर्षितं पतिं निजमभ्यभ्यगच्छत् । सह पितृभ्यां मातुर्धात्र्या चाहं

कतिपयैरहोभिरात्तसादोज्जयिनीम् । अत्र च पितरौ परिचरन्दैवचेष्टितमालोचयन्भवन्तं चिन्तयान एव कालमतिवाहयन्मालवराजतनयायाः प्रियसख्या बालचन्द्रिकया समाजे साकूतमालोकितः । स्मरविलसितश्चाहमपि तां सरागमालोक्य कथंकथमपि गृहानभ्यगच्छम् । ततश्च तस्मिन्नेवाहनि पंचशरशराणां लक्ष्यीभूतोहं कयाचित् परिव्राजिकया द्वारभूतया तां बालचन्द्रिकामात्मवशतामानीय परानन्दमन्वभूवम् । अथैवंगते कदाचिन्मानसारमन्त्रिमुख्यचण्डवर्मानुजेन सिंहवर्मणा दृष्टापहर्तुं च समीहिता । सा च वेपमानमानसा मदेकशरणा मामावेदयत् । अनन्तरमहमचिन्तयम् । अयं दुष्ट उपायेन हन्तव्य इति । रहसि बालचन्द्रिकामशिक्षयम् । आकर्णय भद्रे । सिंहवर्माणमित्थं ब्रूहि । दिष्ट्या त्वादृशैः पुरुषसिंहैर्मादृशे जनेपि कृपादृष्टिः क्रियते । ममेदं तारुण्यं लावण्यं च चरितार्थं भविष्यति । किंतु केनचिद् मुनिना शुश्रूषापरितुष्टेन पुरा किंचिदभिहितं तन्मया स्मर्यते । बाले यस्त्वया समयेन समेष्यति स मे प्रसादपात्रं भविता । कः समय इति मया पृष्टो मुनिराचष्ट । सङ्केतनिकेते प्रदीपार्चिर्न विधेयम् । तत्र तु मच्छक्तिप्रेरिता काचिद्दैवदासी प्रदीपं प्रकाश्य स्वयमेव प्रादुर्भविष्यति । प्रादुर्भूतायां च तस्यां प्रदीपे च प्रज्वलिते प्रथमरात्रौ युवाभ्यां विविधशृङ्गाररससंदर्भितरसालकाव्याश्रयाः कथा एव कर्तव्या न पुनर्बाह्यमपि सुरतम् । द्वितीयरात्रौ तु बाह्यसुरतं विधेयं न त्वाभ्यन्तरम् । तृतीयरात्रौ तु यथेष्टमाभ्यन्तरमपि विधेयम् । यद्येवं तं समयमतिक्रम्य प्रसह्य विलसिष्यति तर्हि मच्छक्तिप्रेरितानैर्ऋतात्ध्वंसं प्राप्स्यति । एतच्च वृत्तान्तं तेन प्रथमरात्रावेव त्वत्सङ्गमायाजिगमिषुणा सर्वेभ्यः सुहृद्भ्यः स्वकीयेभ्यो निवेद्यमिति । स नूनमेतत्सर्वमभ्युपैति । अहं तु युवयोरागमनात्पूर्वमेव युवतिवेषं विधाय संवृतदीपभाजनो निगूढनिशितक्षुरिको गिरिशगलगरलसमतिमिरजालगुम्फिते निशीथे निर्गत्य सिंहवर्मकालरात्रिकेशपाशायितध्वान्तगर्भे (तान्तः) चान्तःप्रदेशे गृहैकदेशे स्थित्वा यथावसरं विवृतदीपभाजनः प्रादुर्भविष्यामि । स तु दृष्ट्वापि मुनेः प्रभावं कामान्धकारविनष्टदृष्टिर्विस्मृतसमयबन्धो

व्युत्क्रान्तकाव्यकथाक्रमो मामेति किं मृत्योरपि न बिभेषीति च त्वया वारितोपि दैवमारितोपि न स्थास्यति समये तदा तं संकेतनिशान्ते निशान्तभागे निशातशस्त्रघातयातजीवितं निपात्य गृहं यास्यामि । गते तु मयि प्रोद्घोष्यं समयातिक्रमदोषान्निहतो राक्षसेनेति । मुनिनिर्देशातिवर्तिनां कुतस्तरां कुशलमिति सर्वोपि कुशलजनो वक्ष्यतीति । इत्थमेव त्वया मया च विहिते चिन्तितार्थः संपन्नः । नियतिवशात्सोहमत्र वसन्नकस्मादत्रभवद्दर्शनपात्रमस्मीति । ततो बहुमानपुरःसरं प्रणम्य पुष्पोद्भवेन प्रापितः स्ववेशनं पूजितश्चोपचारैः परमशर्मानुभवन्नवात्सीद्राजवाहनः । यस्य कथामकथयं त्वत्पुरतः सोयमस्मत्सर्वस्वप्राणनाथः संप्राप्तो महाराजकुमार इति बालचन्द्रिकां वदन्नानन्दमाससाद पुष्पोद्भवः । पुष्पोद्भवस्य प्रेमास्पदीभूतं मित्रमयं कश्चिद्द्विजोत्तमोस्तीति जनैर्विज्ञातो विविधनयविनयविलसितैः सर्वजनाननुरञ्जयन्नुज्जयिन्यामुवास । एवं ब्राह्मणच्छद्मना मनागिव पौरान्वशेचकार । एवं निवसता राजवाहनेन कदाचिदवन्तिसुन्दरी दृष्टा । परस्परदर्शनाच्च समेधितरागसागरौ बालचन्द्रिकाद्वारा ऐन्द्रजालिकदर्शितमेघान्धकारव्यग्रेषु परिजनेषु कन्यान्तःपुरगतेऽवन्तिसुन्दरीभवने संगतौ संभोगसुखमन्वभूताम् । एवं च कदाचिद्गते काले भुवनवृत्तान्तं जिज्ञासुर्मालवेन्द्रकन्या कृताञ्जलिर्भगवतो नारायणस्य सृष्ट्यादिलीलाः शुश्रूषमाणा प्रश्नं कृतवती । तया प्रेरितो राजवाहनः शास्त्रप्रक्रियां पुरस्कृत्य सर्वमवर्णयत् । इति तृतीय उच्छ्वासः ॥

भट्टनारायणकृतं पूर्ववृत्तान्तदर्शनम् ।
अप्राप्य दण्डिरचितं हरिशर्मा व्यलीलिखत् ॥

ग्रन्थसंख्या २९०

---

( Dec. Col. Mss. No. 32. / 1873–74. )

